सुन्दर कवि, ग्वालियरवासी
दानलीला
३२५७
राधाश्रृङ्गारनखशिखवर्णन
२२०३(१),२२०३(२)
सत्यासत्यनिरूपण
४७६८
हरिचन्दप्रबन्ध [जैन]
१९६६(२)(1696 V. S.)

सुन्दर कुँअरि (नेहनिधि), रूपनगर
नेहनिधि
(रचना संवत् 1718 V.S.)
३८३७(१)
रङ्गझर, भावनाविलास
३८३७(४)

सुन्दरदास
कालचिन्तावणी
७८३०(२)
कृतिसंग्रह
१९१२(१)
ज्ञानझूलना
१४८९(२२)
ज्ञानसमुद्र
२००८(१),२२०९(६),२४४०(२),३४१०,
३४५६(३)३८०८(२)३६६३(1746V.S.)
रामचरित्र
२१५६(१९)(1876 V. S.)
वेदविचार भाषा
२००८(३)
स्तोत्र भाषा
१४८९(२३)
सवैया
१४८९(२४),३९१४

सुन्दरश्रृङ्गार
(रचना संवत् 1688 V.S.)
७६१,७७७(१),९५९(१)१९३९(३),२४५२
(२)३४३१(२)(1765V.S.),३६८३,३७८४
(२),४६८०,४७९२(३),७८००(१)
साध को अंग
७८३०(३)

सुन्दरलाल कवि
रामसुजससागर
(स० रामसिंह (द्वि०) प्रीत्यर्थ)
४९४१

सूरति मिश्र
अमरचन्द्रिका (बिहारीसतसई टीका)
१९८६
अलङ्कारमाला
३७३९(२)
रसरत्न
४९१४

सूरदास
पद
३३८७(१)
पद (रघुनाथजन्म)
८८९
पदसंग्रह
१७६२,२४४०(५),१८९८,२४३७(३),
२४५१, ३३०८,४४८८,७७६०(१)
पद पचीसी (रागवार)
१३३४(९),१९५१(१६)
पदावली
३८८५

नवरत्न [का.]
१४६१
नृत्यविलास (संगीतदर्पणसारगत)
३८९३
भगवद्गीता भाषा
१४८६ (१), १७६८,२४६६ (१), ३७६८
(१), ३६३० (१)(1821 V.S.)
भागवत भाषा
१३३६ (प्र० द्वि० स्कन्ध)
१५३४(षष्ठ स्कन्ध)
सङ्गीतदर्पणसार
१७३०,३५१६ (1823 V.S.)

हरिसिंह
पद
१६०७ (४)
भवानी स्तुति
२२०४ (१)

हरिसुख
भागवत दशमस्कन्ध भाषा
२२१५

हाफिज मोहम्मद
दीवान-ए-हाफिज (नागरी लिपि में)
१८८७

हामिद कवि
बारहमासा
१२०२,१२६५

हालीपाव
शब्दी
१६३५ (२६), २४४० (३६), ३३२२
(२५) (1717 V.S.)

हितहरिवंश
अनुरागलता
१६८८ (८)
अष्टक
१६८८ (३०)
आनन्दविनोद
१६८८(२४)
ख्यालहुलास
१६८८(११)
चौरासी वाणी
२१६६(२)
जीवदशा
१६८८(१०)
जुगलध्यान
१६८८(२५)
दानलीला
१६८८(१३)
नृत्यविलास
१६८८(२३)
प्रीतिचौवनी लीला
१५४१(५)(1763 V. S.), १६८८(३१)
भक्तनामावली
१६८८(२०),१६८८(२८),३०६०(८)
भजनकुण्डल
१६८८(१४)
भजनशत
१६८८(१८)
भजनाष्टक
१६८८(१५)
मनसिंगार
१६८८(१२)
रतिरहस्यमञ्जरी
१६८८(१६)
रसमुक्तावली
१६८८(२)
रसरत्नावली
१६८८(१७)

———

## EXTRACTS FROM AND NOTES ON
### Some Important Manuscripts

### 656. अभिज्ञानशाकुन्तलटीका by राघवभट्ट

Opening :—

यत्त्रेधाऽजनि दशधा द्विधागतं यद्यजातं दशविधमेति षोडशत्वम् ।
यद्गीतं सममहदादिकस्य चाद्यं तेजस्तज्जयति हि योऽस्य रूपमग्र्यम् ॥१॥
उद्दिश्यामरनिम्नगां गतवतोः श्रुत्वा कलिं शैशवे
यः साक्षात् करवाणि तामिति जटाजूटोपकण्ठं गतः ।
पीत्वा पुष्कलपुष्करेण न किमप्यत्रेति विस्मापयन्
पित्रोर्विग्रहवग्रहं विहितवान् पायाद् गजास्यः स वः ॥२॥
नाट्यवेदाब्धिमालोड्य ताण्डवं योऽहि निर्ममौ
स्वात्मनाभिनयन्तं तं प्रणमामि महानटम् ॥३॥
या लास्यसंप्रयोगेण शिवाराधनतत्परा
भवतां भूतये भूयात् सा सदा सर्वमङ्गला ॥४॥
वाचिकाद्यभिनयो यमनाद्याचार्यमत्र भरतं मुनिमीडे । (?)
लास्यताण्डवनियोजनलीलाकौशलेन परितोषितभर्गम् ॥५॥

Closing :—

नाट्यालङ्कृतिशास्त्रतत्वविदुषाऽभिज्ञानशाकुन्तल-
व्याख्येयं सरसा निशातमतिना श्रीराघवेण स्फुटा ।
अर्थद्योतनिकाभिधा ध्वनिभिरर्थालङ्क्रियानिर्भरा
श्रीविश्वेश्वरपत्तने विरचिता तद्भक्तियुक्तात्मना ॥१॥
सहृदयहृदयाः सुजना निपुणा नित्यं विलोकयन्त्वेनाम् ।
स्यात्प्रवृत्तिरेषा हि न हि नवकृतिविद्वेषतोऽन्येषाम् ॥२॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणभट्टश्रीपृथ्वीधरात्मजश्रीमत्पदवाक्यप्रमाणपारावार-पारीणसाहित्यकलाधरसकलकलाशास्त्रप्रवीणभट्टश्रीराघवविरचिताऽभिज्ञानशाकुन्तलव्याख्याऽर्थद्योतनि - काभिधा समाप्तिमापत् ॥ शुभं भवतु ॥ कल्याणमस्तु ॥ नृपतिविक्रमशके १६९० तथापि शालि-वाहनशके १५५५ चित्रभानुनामसंवत्सरे तथापि श्रीमुखनामसंवत्सरे आषाढ़मासे शुक्लपक्षे ति० ७.

The year of composition is not mentioned in this commentary but Raghav Bhatt must have rendered it prior to 1550 V. S., the year in which he

wrote a commentary पदार्थादर्श on शारदातिलक। Obviously he must have been inclined to तान्त्रिक literature after he had written his commetaries on उत्तररामचरितम् (C. C.; Pt. I.; 1962; p. 64) and मालतीमाधवम् (p. 453).

Two copies of आदर्श (पदार्थादर्श) टीका on शारदातिलक by Raghav Bhatt are available in this collection at nos. 6935 and 7295. The latter one is incomplete but the date of its composition can be made out from the colophon of the former :—

आकाशेषुशरक्ष्मापरिमिते रौद्राभिधे वत्सरे
पौषे मासि सिते दले रवितिथौ पक्षे च सिद्धयन्विते ।
तन्त्रेऽस्मिन् सुधिया व्यधायि रुचिरा श्रीराघवेण स्फुटा
टीका सद्गुरुसंप्रदायविमला विश्वेशपुर्यामिति ।।१।।

इति शारदातिलकटीकायां राघवभट्टविरचितायां सत्संप्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां पञ्चविंशः पटलः ।।२५।।

According to it he completed this commentary in संवत् 1550 known as रौद्रवर्ष on रवितिथि (७) in the white half of the month of पौष at विश्वेशपुरी (Banaras).

65. **अभिराममणि :** also mentioned as **रामनाटकम्** by **सुन्दर मिश्र** in Ms. no. 350.

Opening :

रागस्ते सहजोऽपि चेतसि परित्यक्तस्वभावोऽधुना
सम्प्राप्तो बहिरेष मानमहितं मुञ्चेति चाटूक्तिभिः ।
कोपात्कोकनदच्छविमुखीमाच्छिद्य यान्तीं करं
पद्मां मौनपरायणामनुनयन् पद्माप्रियः पातु वः ।।१।।

सूत्रधार :—

अद्य खलु सुरासुरनरकिन्नरतिर्यगलङ्घनीयनियोगस्य जलधितनयानुरागवशादगणितजलनिधिनिकटनिवासलोकापवादस्य भगवतः पुरुषोत्तमस्य यात्रायां परिमिलितयानया विदग्धविद्वज्जनपरिषदा मध्यदेशीयमहाकविसुन्दरमिश्रग्रथिताभिनवाभिराममणिनामधेयं नाटकं नाटयितव्यं त्वयेत्यादिश्य पुनरिदं परस्परमतिप्रशंसितम् । तदिदानीं परां कोटिमधिरूढोऽयमदूषणो मणिः ।

Closing : तथापीदमस्तु—

जगति परगुणेषु पक्षपाती भवतु नृपश्च बुधो निरभ्यसूयः ।
सहृदयं निरवधि भूयात् प्रगुणाश्च भवन्तु भूमिदेवाः ।।२०५।।

इति निष्क्रान्ताः सर्वे ।।

श्रीरामचन्द्राभिषेकोनाम सप्तमोऽङ्कः ।।

शाके शशाङ्काश्विशरेन्दुतुल्ये, ग्रामे वसिष्ठाश्रमतः प्रसिद्धे ।
तदेतदोजागरिणा निबद्धं मुदे कवीनां कविसुन्दरेण ।।२०६।।

Colophon :

समाप्तमिदमभिराममणिनामधेयं नाटकम् समाप्तं ।। शुभमस्तु ।। संवत् १६८८ शाके १५[५]३ समये जेठ सुदि चतुर्थी ।। लिखितं भोजराज कायस्थ ।।

The date of composition, according to the above verse, comes to 1521 S'aka=1656 V. S. This copy was, therefore, written after only 32 years of composition and thus happens to be one of the earliest copies.

4628. अश्वमेधहौत्रपारिप्लवव्याख्यानम् by दिवाकर पौण्डरीक

Only the first folio of the work, containing the following text on one side, is available :—

गुरुं सदाशिवं नत्वा याज्ञिकायो दिवाकरः ।
अश्वमेधीयर्षिहौत्रं गुरुभक्ति यथा मतौ ।।१।।
द्विवेदी रूपनाम्नोऽयं गुरुसेवाकृतं ततम् ।
पठितव्यौ सदा सत्यं गुरुवाक्यादिदं श्रुतम् ।।२।।
दृष्ट्वा साङ्ख्यायनं सूत्रं पितरं देवरामकम् ।
दिवाकरो वितनुते योगं यज्ञाश्वमेधयोः ।।३।।
ज्ञानं तथाश्विनं प्राज्ञैर्यथासूत्रकृतोदितम् ।
व्यक्तमारभ्यते वक्तुं मन्दधीप्रतिपत्तये ।।४।।
स्वशाखीरूपनाम्नोऽयं पठितौ सहसूत्रकम् ।
गुरुवाक्यादिदं सर्वं पारिप्लवं पपृच्छकम् ।।५।।

दिवाकर पौण्डरीक was the son of देवराम पौण्डरीक and a great grandson of रत्नाकर पौण्डरीकयाजी, guru of Sawai Jai Singh.

5797. आत्मस्वाराज्यसिद्धिव्याख्या by गङ्गाधर सरस्वती

Opening : (पूर्वार्द्धम्)

तरुणतपनवर्णं कर्णलीलावधूत-भ्रमरनिवहगुञ्जाकर्णनोद्धूतहर्षम् ।
अमरवरकिरीटोद्घृष्टपादाब्जमन्तःस्फुरतु दलितविघ्नं दन्तिवक्त्रं महो नः ।।१।।
अभ्यर्थयामि करुणामृतपूर्णचित्तान् धीरान् प्रणम्य गुणदोषविवेचनाय ।
मात्सर्यपङ्ककलुषाशयदुर्विदग्धान् मन्ये तृणाय न विदुर्यदमी स्वदोषान् ।।

(उत्तरार्द्धम्) मङ्गलाचरणम्

वरमभयमुदारं पुस्तकं चाक्षहारं मणिवलयमनोज्ञैः पाणिपद्मैर्दधाना ।
सितवसनललामा कुन्दमुक्ताभिरामा वसतु शशिनिभा सा वाचि वाग्देवता नः ।।
चूडावतंसीकृतचन्द्रखण्डं गौरीकरोल्लालितचारुशुण्डम् ।
भक्तौघविघ्नप्रशमप्रचण्डं भजे निजे चेतसि वक्रतुण्डम् ।।

Closing :

नित्यं दिशन् सुकृतिनामभिवाञ्छितार्थान् निर्वाणसिन्धुसलिलैर्भरितालवाल: ।
आनन्दनन्दनवने नितरां निरूढ: कैवल्यकल्पतरुरस्तु मुद बुधानाम् ।।१।।
वस्वब्धिमुन्यवनिमानशके वृषाख्यवर्षस्य माघसितवाक्पतियुक्तषष्ठ्याम् ।
गङ्गाधरेन्द्रयतिना शिवयो: पदाब्जे भक्त्यार्पिता सुकृतिरस्तु सतां शिवाय ।।२।।

Colophon :

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामचन्द्रसरस्वतीपूज्यपादप्रशिष्येण गङ्गाधरसरस्वत्याख्य-भिक्षुणा विरचितायां स्वाराज्यसिद्धिव्याख्यायां कैवल्यकल्पद्रुमाख्यायां कैवल्यप्रकरणं सम्पूर्णम् ।।

379. कादम्बरीकथासार: by अभिनन्द

Opening :

शिवं ददतु व: सौरे (शौ) द्वंयतुल्यश्रमा: क्रमा:
ये चादौ गोष्पदं पश्चात् त्रैलोक्यं क्रामतश्च ये ।।१।।

Closing :

इति विहितविलास: पुण्डरीकेण साकं
दिवि भुवि च विचित्रोद्यानलीलाविहार: ।
अभिमतफलसम्पद्वर्द्धमानाभिनन्द:
श्रियमभजत चन्द्रापीड़मूर्तिर्मृगाङ्क: ।।४२१।।

Colophon :

इति श्रीबाणसुताभिनन्दकृतकादम्बरीकथासारोद्धारो नाम ग्रन्थ: सम्पूर्ण: ।। संवत् १७३० स. मा. सु. १

Aufrecht mentions अभिनन्द, the author of कादम्बरीकथासार, as son of Bhatta Jayanta (Vṛttikār)—C.C., I.; p. 24.

3406(4). कार्तवीर्यार्जुनाष्टकम् by श्रीकृष्णभट्टकविकलानिधि

श्रीगणेशाय नम: ।। अथ कार्तवीर्यार्जुनस्तोत्रं लिख्यते ।।

वन्दे श्रीकार्तवीर्यार्जुनपदकमलं नम्रतत्तन्नृपाल–
प्रोत्फुल्लन्मौलिमाल्यस्खलितरसभरीलोभलोलातिमालम् ।
तापश्रेणीतमिस्रापहरणनखरुक्कोटिमार्तण्डचण्डे
यस्मिन्नानीतमात्रे हृदि जगति जनैर्नैव किञ्चिद्दुरापम् ।।१।।
वन्दे माहिष्मतीशं कलितशरधनुर्विस्फुरद्दो:सहस्रं
रत्नं प्रत्युप्तदीव्यत्कनकमयमहामण्डनश्रीमनोज्ञम् ।
सन्ध्योत्फुल्लत्कुसुम्भारुणकिरणगणाकीर्णनित्यप्रदीव्यद्–
दिव्योष्णीषाम्वराढ्यं त्रिभुवनविलसद्वैभवोदारशीलम् ।।२।।

वन्दे श्रीकार्तवीर्यार्जुनमहमनिशं हैहयेन्द्रान्ववाय–
प्रासादोत्तुङ्गकेतुं प्रकटितमवितुं तं निषत्तिसन्धुसेतुम् ।
लोकानां कोटिभिर्यः क्षणमपि कलितः कामिनीकोटिसिद्ध्यै
कोटयाकारेण कोटिप्रदविकटधनुः कोटिभूराविरास्ते ।।३।।
वन्दे फुल्लारविन्देक्षणकलितमहानन्दवृन्दारकेन्द्रं
श्रीसन्दोहैककन्दं वपुषि विलसितामन्दमन्दारमालम् ।
विस्फूर्ज्जत्सप्तकल्पान्तरगसुरसरित्तुङ्गरिङ्गत्तरङ्ग–
क्रीडत्कान्तासमूहप्रसृतभुजलतावर्तिनं कार्तवीर्यम् ।।४।।
वन्दे साहस्रसंख्याकलितभुजबलारुद्धवेगप्रधावद्–
धारासन्दोहसंवर्द्धितसुरसरिन्मज्जदन्तःपुरस्य ।
चण्डीशार्चान्तरायप्रकुपितमनसो रावणस्यातिदर्पा–
च्छेत्तारं सुप्रसादक्षणसुलभतरं चक्रिचक्रावतारम् ।।५।।
वन्दे रेवाम्बुसङ्घर्षणविगलितमदोत्कटप्राङ्गणस्थ–
स्वर्णप्रासादराजच्छिखरतलमहारत्नसिंहासनस्थम् ।
दिव्यैश्वर्यस्वभावं सुरयुवतिगणोद्गीत भूयःप्रभावं
दत्तात्रेयैकनाथं त्रिभुवनवरदाष्टादशद्वीपनाथम् ।।६।।
वन्दे मारीभयघ्नं कुटिल मतिहरं चौरवृत्तान्यथाकृन्–
नामानं कोटिकामावलिवितरणकृद्वीपराजप्रभावम् ।
दीव्यन्मार्तण्डकोटिद्युतिपरिभवकृत्कान्ति सन्दोहकान्तं
वारैकध्यान साक्षात् कृतनिजवपुषं भीहरं हैहयेन्द्रम् ।।७।।
वन्दे सप्तार्णवक्ष्मातलविजयभवत्तूर्ण राज्याभिषेक–
प्रोद्भूतोऽगाधसिन्धुं द्विजगणविहिताशीर्वचोनन्दिचित्तम् ।
दृप्यद्दैतेयलक्ष्मीहरणनिपुणतायुक्तकोदण्डकाण्डं
रेवारिङ्गत्तरङ्गावलिवलितमहोद्दण्डदोर्दण्डचण्डम् ।।८।।
इतिश्रीकृष्णेनाखिलकविकुलालङ्कृतिबुधा
कृतान्यष्टौपद्यान्यधिकमनवद्यानि नितराम् ।
निशम्य श्रीर्कीर्त्तिप्रचुरसुखसन्तानपटलीं
स मे दद्यात्सद्यः सपदि कृतवीर्यस्य तनयः ।।९।।

इति श्रीकृष्णकविविरचितं श्रीकार्तवीर्याष्टकस्तोत्रं सम्पूर्णतामगमत् ।।

वाच्यमानो चिरंजीव्यात् ।। शुभंभूयात् ।। श्रीः ।।

संवत् १८१२ वर्षे मिति जेष्ठ शुक्ल सप्तम्यांतिथौ ।। कल्याणमस्तु ।।

122. काव्यकौस्तुभ: by विद्याभूषण

Opening :

कलाभिर्निभृत: श्रीमान् राधया समलङ्कृत: ।
दीव्यत्कुवलय: सोऽयं विधुर्विजयतेतराम् ।।१।।

Closing :

नवप्रभ: सम्प्रति काव्यकौस्तुभ:, विभाति विद्यैकविभूषणेन य: ।
आलोकतस्तस्य जनै: सुबुद्धिभि:, परीक्ष्यतामेष तु काव्यपूरुष: ।।१।।
विद्याभूषणगदितं गदि तन्त्रं काव्यकौस्तुभं विभ्रत् ।
तिष्ठति यदि कमनीयो नमनीयाऽसौ न किं सदसि ।।२।।

इति काव्यकास्तुभे शब्दार्थालङ्कारनिर्णये नवमी प्रभा ।।६।।

अष्टत्र्यष्टैकमानेब्दे फाल्गुने सुदि भास्करे ।(१८३८)
पञ्चम्यां तेजभानेन लिखितं काव्यकौस्तुभम् ।।

394. काव्यप्रदीप: by गोविन्द भट्ट

Opening :

सोनोदेव्या: प्रथमतनय: केशवस्यात्मजन्मा
श्रीगोविन्दो रुचिकरकवे: स्नेहपात्रं कनीयान् ।
श्रीमन्नारायणचरणयो: सम्यगाधाय चित्तं
नत्वा सारस्वतमपि मह: काव्यतत्त्वं व्यनक्ति ।।१।।

Closing :

ज्येष्ठे सर्वगुणै: कनीयसि वयोमात्रेण पात्रे धिया
गात्रेण स्मरगर्वखर्वनपरे निष्ठाप्रतिष्ठाश्रये ।
श्रीहर्षे त्रिदिवंगते मयि मनोहीने च क: शोधयेत्
अत्राशुद्धमहो महत्सुविधिना भारोऽयमारोपित: ।।१।।
परिशीलयन्तु सन्तो मनसा सन्तोषशीलेन ।
इममद्भुतं प्रदीपं प्रकाशमपि य: प्रकाशयति ।।२।।
दीपिकाद्वितयं कन्ये प्रदीपद्वितयं सुतौ ।
स्वमतौ सम्यगुल्लाघ्य गोविन्द: शर्म विन्दति ।।३।।

इति श्रीमहामहोपाध्याय श्रीगोविन्दकृते काव्यप्रदीपे अर्थालङ्कारनिर्णयो नाम दशम उल्लास: समाप्तिमगमत् ।। श्रीरस्तु ।। ग्र. सं. ५०००.

Originally this work was commenced by S'ri Harṣa, the author's younger brother. Govinda had to complete it as S'ri. Harṣa expired before finishing it.

204. काव्यादर्शमार्जनम्, a ct. on काव्यादर्श of दण्डिन्, by हरिनाथ

Opening :

गिरीशहृतदेहार्द्धां गिरीशत्वसमृद्धये ।
गिरिशरीरे विभ्राणां गिरीशतनयां नुमः ।।१.
किञ्चिच्चोलाञ्चलविगलनोदं वने राधिकायाः
सव्रीडायाः सपदि पिहिते वक्षसि क्षिप्तमात्रः ।
पायादस्मानभिनवसुधाशालिनो नन्दसूनो–
र्वात्योद्वेल्लत्कुवलयवनीकोमलोद्दङ् निपातः ।।२।।
साम्ना सुवर्णदानेन भेदाद्विग्रहतोऽपि वा ।
उद्धतोऽपि कठोरोऽपि मया दण्डी प्रसाद्यते ।।३।।
तातं विश्वधरं नत्वा ज्यायांसं केशवं गुरुम् ।
भानोरवरजेनायं प्रक्रमः क्रियते मया ।।४।।
दुर्बोधपदसधाननिकाममलिनात्मनः ।
क्रियते हरिनाथेन काव्यादर्शस्यमार्जनम् ।।५।।
विशिष्टशिष्टाचारानुमितकर्तव्यताकं समुचितेष्टदेवतास्मरणरूपं ।
विघ्नकादाचित्काभावाय कृतं शिष्यशिक्षार्थं निबध्नाति चतुर्मुखमुखाम्भोजेति ।।

Closing :

कविपण्डितमूर्धन्यश्रीविश्वधरजन्मनः
कृतौ श्रीहरिनाथस्य परिच्छेदस्तृतीयकः ।।
द्रोहेण वा स्नेहवशेन वापि स्वभावतो दुर्जनसज्जनाभ्याम् ।
दोषाय वा कस्य निराक्रियायै कृतिर्मदीया परिभावनीया ।।

Colophon :

इतिश्रीकविपण्डितमूर्धन्यविविधविबुधावलीसेवनीयमहामहोपाध्याय श्रीविश्व (ध) रात्मज–
महामहोपाध्यायश्रीकेशवानुजमहामहोपाध्याय श्रीहरिनाथकृतौ काव्यादर्शमार्जने तृतीयः परिच्छेदः ।।
संवत् १६५१ वर्षे ज्येष्ठसुदि १५ सुरदासेन लिखितः ।।

Aufrecht mentions only one more work by him as सरस्वतीकण्ठाभरणमार्जन but there is a manuscript of प्रशस्तिरत्नावली by him available in this collection at no. 423.

The author was a contemporary of Maharaja Man Singh I.

## 207. काव्यालोक : by हरिप्रसाद

Opening :

अभिधेयकथनपुरस्सरं सप्रयोजन शास्त्रारम्भं प्रतिजानीते ।।

काव्यस्य परमाह्लादकीर्त्यादिफलयोगिनः

हरिप्रसादविदुषा मीमांसा कापि तन्यते ।।१।।

निपुणवर्णनारूपकविकर्मणः कापीत्येकदेशमात्रकथनं मीमांसालक्षणविचारः, परमाह्लाद इति सकलप्रयोजनमौलिभूतं तदर्थकपुरुषार्थसाधनप्रवृत्तेः आदिपदाद् धावकादीनामिव धनं मयूरादीनामिवानर्थनिवृत्तिरित्यादिधनानर्थनिवृत्तिव्यवहारज्ञानादिकं संगृह्यते ।

कापि दृग्व्यञ्जनावृत्तिर्येन याति रसात्मतां सद्यः श्रवणसंस्कारैस्तदिदं काव्यमुच्यते ।।

Closing :

अब्धिदिङ्मुनिभूवर्षे माघशुक्लमुनौरवेः

काव्यालोकमिदं पूर्णमकारि गुरुसन्निधौ ।।

इयं मधुकरीभिक्षा सुमनोभ्यः समाहृता बालानां तुष्टये ।

गर्वो न मनागपि विद्यते प्राचीनैर्यदि इहोदितम् ।।

बहुविधैर्ग्रन्थैस्तदत्राहृतं संक्षेपेण न किञ्चिदन्यदुदितं ।

गर्वेण तद्वन्मया व्याख्यातं तदुदाहृतं तदुदितं भूयोऽपि ।।

तच्चापल भो विद्यागुरवः क्षमन्तु शिशवः कुर्वन्ति चात्मोचितं ।।

इहेति काव्यलक्षणप्रस्तावे ।। अत्रेति काव्यालोके ।। चकारो युक्तार्थे सर्वमलङ्कारस्वरूपमवदातम् ।।

इति श्रीमन्माथुरमिश्रगङ्गेशात्मज-हरिप्रसादनिर्मिते काव्यालोकेऽर्थालङ्कारनिरूपणो नाम सप्तमः प्रकाशः ।। समाप्तः ।।७।।

In continuation but in a different handwriting :—

संवत् १७९८ वर्षस्य पौषशुक्लद्वितीयायां लिखितं चोक्षचन्द्रेण ।। श्रेयो भवतु समेषां ।।

अलङ्काराम्बुधेः पारमाप्तुमिच्छा भवेद्यदि ।

काव्यालोकप्रवहण तदाश्रयत कण्ठतः ।।

The author, some how or other, seems to be connected with the royal कूर्मवंश as he mentions it in a verse as an example of प्रतापवर्णन—

रत्नानां निलयः सुधासमुदयः क्षोणीतलेऽद्धासनं

गाम्भीर्येण पराश्रयः सुविदितो मत्वेति मागा मदम् ।

भो रत्नाकर ! तावकीयमहिमानिर्माणसर्वंसहः

सम्प्रत्येष धरावलम्बितपदो जागर्ति कूर्माधिपः ।।

On the margin the word कूर्म is explained as कछवाहा इति भाषा ।।

The date of composition 1784 V.S. (1728 A.D.) corresponds to the time of Sawai Jai Singh and the auspicious year of the foundation of the city of Jaipur by him.

6573. कुलमूलावतार: by शङ्कराचार्य (गौडीय)

Opening : नमश्चण्डिकायै ।।

पञ्चवक्त्रोऽपिभगवान् ऐश्वर्यस्थोऽनीश्वर: ।
स्तुतौ यस्या महादेव्यास्तां वन्दे त्रिपुरातनीम् ।।१।।
लम्बोदरस्य पौत्रेण कमलाकरसूनुना ।
कुलमूलावतार: श्रीशङ्करेण विधीयते ।।२।।
महात्रिपुरसिद्धान्तसर्वस्वे पदसङ्कटे ।
एनमाश्रित्य सुधियो व्रजन्तु तत्परं मह: ।।३।।

Colophon : इति गौडीयशङ्कराचार्यकृत: कुलमूलावतार: ।। शुभमस्तु ।।

शकाब्दा: १५९५ (1730 V. S.) मागशीर्ष बदि त्रयोदशी कुलमूलावतारोऽयं लिखित: श्रीकमलशर्मणा ।।

Aufrecht says that one कुलमूलावतारकल्पसूत्र is quoted in प्राणतोषिणी and कुलमूलाचार in ताराभक्तिसुधार्णव but he does not mention the name of this author.

485. कुशवशचरित्रम् by हीरानन्द दाधीच

Opening :

नत्वा श्रीगणनायकं अघहरं अम्बामुमां पार्वतीं
शम्भुं चाथ त्रिलोचनं अभयदं भक्तार्तिनिर्णाशनम् ।
नत्वा चिद्घनपादपद्मयुगलं अम्बां तथा गौरवीं
नत्वा लीलसरस्वतीं भगवतीं जाड्यान्धकारापहाम् ।।१।।
गीतं पूर्वकवीश्वरैश्च बहुधा भाषापदै: संस्कृतै:
छायामाश्रित्य तेषां कविवरवचसां वाग्विलासं करोमि ।(?)
क्षंतव्यं मम सज्जनै: खलु इह धाष्टर्यं परं पण्डितै:
गायामि कुशवंशजातचरितं श्रव्यं कवीनां प्रियम् ।।२।।
भूमेर्भारभयानुदष्णु च सुरैरभ्यर्थितो राघव:
जातो सूर्यकुले नराकृतिरजो नित्यो निरीहो ऽव्यय: ।
सीतार्थञ्च निहत्य राक्षसकुलं कीर्तिंनृणां चाघहां
सस्थाप्येव गतो स्वधाम परमं तं रामचन्द्रं नुम: ।।८।।

तस्यापि तनयौ बभूवतु पुरा द्वावेव भूपालकौ
ज्येष्ठश्चैव कुशोऽथ तस्य अनुजो नाम्ना लवो विश्रुतः ।
तौ चापि बहुविक्रमौ सुरमतौ आस्तां क्षितेः पालकौ
यज्वानौ रघुनन्दनौ बहुधनौ वाल्मीकिना पालितौ ॥९॥
रामे चाथ गते स्वधाम परमं ज्येष्ठः कुशो राज्यकृत्
तेनापि च जिताः परे च क्षितिपा धर्मस्य विद्वेषिणः ।
द्वौ चापि तनयौ कुशस्य बलिनौ जातौ उदारस्तवौ
नाम्ना चातिथिरप्यभूत् क्षितिपतिः तस्यानुजः कुच्छवः ॥१०॥
अतिथिः कुच्छवश्चोभौ कुशस्य तनयौ स्मृतौ ।
अतिथिः प्राप्तवान् राज्यं पितृपैतामहञ्च तत् ॥११॥
प्रतीचीं कुशवायाथ ददौ स भ्रातृवत्सलः ।
समुद्रकच्छं सम्प्राप्य पुरीं चाथ निवेशयत् ॥१२॥

× × ×

कुच्छवस्य तु वंशाऽयं विततः क्षितिमण्डले ॥१५॥

× × ×

प्राप्ताश्चाथ क्रमेण ते च जयिनः वैराटनाम्नं पुरं
जित्वा चाथ विराटजां च बहुशः राज्यञ्च तं पालयन् ।
कालस्यातिक्रमेण ते च बलिनः प्राप्ताश्च अम्बावतीं
दृष्ट्वा तत्र शिवं शिवां भगवतीं आराधयन्प्राथिनः ॥२२॥

Then the poet describes मानसिंह, स० जयसिंह and माधवसिंह (**प्रथम**) ।

Closing

पूर्वं राज्ञा जयसिंहेन दत्ता पित्रा ते स्वर्णजाश्चाष्टमुद्राः
तांस्त्वं वै दातुमर्हसि मह्यं न्यूनाचाहं माधवेन्द्रान्न कांक्ष्ये ।
यावद्वारिधिशेषपर्वतधरामेघा गजेन्द्राः ग्रहाः
श्रीकृष्णस्य ❀ ❀ परं रघुपतेः वृत्तं हि यावत् स्थिरम् ॥
यावच्चन्द्र रविः सुरेन्द्र विबुधा वेदाः स्वयम्भुः शिवः
तावन्माधवसिंहवीरनृपते ! भोगांश्च भुंक्ष्व क्षितौ ॥६९॥
श्रीमत्कुच्छववंशजात चरितं गीतं मया स्वेच्छया
श्रोतव्यं खलु पण्डितैः द्विजवरैः गद्यैश्च पद्यैर्युतम् ।
स्पर्द्धा माकुरुत मयि द्विजवरे दाधीचवंशोद्भवे
वाक् चैव सुखदायिनी भवति न कर्णेषु कस्याथ वा ॥७०॥

हीरानन्दकविप्रोक्तं चरित्रं कुशवंशजम् ।
शृणोति श्रावयेद् वान्यान् वाञ्छितं प्राप्नुयात्फलम् ॥७१॥
संवते च दशअष्टक संज्ञकवत्सरे च शुभरुद्रसंज्ञके ।
ज्येष्ठशुक्लशुभपूर्णिमादिने पूर्णतां गतं वरकाव्यमिदम् ॥७२॥
लिखितं औदीच्यशुभरामेण ॥

The author seems to be concerned more with the continuance of the eight gold mohors than the observation of prosodical and grammatical rules.

### 473. कृपाशतकम् by अमरराम मिश्र

Opening :

शीघ्रं यत्कुरुते पुरन्दरसमं भूत्या किलाकिञ्चनं
राजन्मानधनं विमानमनिशं साशं गताशं जनम् ॥
कान्ताकामितकामकेलिकलितं कान्तारकन्थाप्रियं
दास्यं प्रेक्ष्य हरेरपीच्छति न कोदास्यं त्वदीयं बुधः ॥१॥
विषं सुधा तस्य रिपुःसुहृत् स्यात् श्रीमाधवेन्द्रेह निदर्शतोऽहम्
त्वदङ्घ्रिमात्राश्रयकृत् सकृत्तेकृपावलोकेन विलोकितो यः ॥२॥

Closing :

ऋतां गिरं तस्य निशम्य गर्वं कुर्वीत मिथ्योक्तिविदूषितः कः ।
अर्प्पहितां देववर्यैः सकृत्ते कृपावलोकेन विलोकितो यः ॥१०१॥

Colophon :

इति श्रीमन्महाराजाधिराजश्रीमन्माधवेन्द्रानुगृहीतेन मिश्रअमररामेण कृतं कृपाशतकम समाप्तम् ॥

### 650. कृष्ण भक्तिचन्द्रिका (नाटिका) by अनन्तदेव s/o आपदेव

Opening :

कोऽपि स गोपकुमारः स्फुरति समाजे व्रजस्त्रीणाम् ।
नवजलधर इव मध्ये तडितां परितः स्फुरन्तीनाम् ॥१॥

अपि च

प्रत्येकं तनुरोमसुश्रितजगज्जालाय गोष्ठेशितु
र्बालाय प्रविनाशितातिविपुलव्यालाय वृन्दावने ।
गोपालाय महीभरक्षितिभृतां कालाय पद्मस्फुरन्
मालाय स्फुटपीतदावदहनज्वालाय नित्यं नुमः ॥२॥

नान्द्यन्तेसूत्रधारः (परितः पण्डितमण्डलीमाखण्डलसभामिव विलोकयन् चटुलसहस्रनयनावलीमवलोक्य स्वगतं)– -इह जगति सारासारविषयविचारचातुरीपरिचयधुरीणचित्तवृत्तीनां तृणतुलनादूरीकृतललनादिविषयविषयकप्रवृत्तीनां निरभिलाषतासमधिगतचतुर्मुखप्रमुखसुरगणशतगुणानन्दनिर्वृतीनां यदुपतिपदारविन्दपरिचिन्तनजनितानन्दनिर्वर्तितमुक्तिविषयाभिलाषनिवृत्तीनां महापुरुषाणां संगतिमात्रसमधिगम्य सुखं भगवद्भजनमेव कर्तव्यत्वेन सततं निरूपयतानेन कविनानन्तदेवाह्वयेन त्यक्तलोकसंकोचमेवमुक्तोऽस्मि यदुत सखे ! पश्यामि बहुशः सखेदं त्वामहर्निशं संसारे तेन कंसारेराराधनमुदाचरेति । तदहमस्यामेव सभायामस्यैव कवेरिममेव निबन्धमधुनैवाभिनीय प्रतिपादयामीति ।

Closing :

क्लेशान्नाशयति केशव एव पुंसां, सन्तोषमेव च स संततमातनोति ।
शीलं त्विदं भगवतः सहजं विबुध्य, जाता वयं जगति साम्प्रतमस्य भृत्याः ।।६९।।

Colophon :

इति श्रीमदापदेवसूनुना विरचितमनन्तदेवेन कृष्णभक्तिचन्द्रिकाभिधाननामनाटकं समाप्तम् ।
कृष्ण गोविन्द गोपाल गोपीनाथ बकीरिपो ! हरे मुरारे कंसारे केशीनाशन केशव !

7. कौमुदीकथा

Opening :

श्रीवर्द्धमानमानम्य जिनदेवं जगत्प्रभुम् ।
वक्ष्येऽहं कौमुदीं नृणां सम्यग्गुणहेतवे ।।१।।
श्रेणिकराजकथा ।।

Closing :

संवत् 1741 शाके 1605 मासोत्तमे फाल्गुने मासे शुभे शुक्लपक्षे तिथौ चतुर्दश्यां भूमिसुतवासरे ।। शुभमस्तु ।।

Colophon :

लिखितं हरिराम तत्पुत्रउदयराम तत्पुत्रगिरिधरदासेन विप्रेण माथुरेण दक्षगोत्रेण लिखितमिदं पुस्तकम् । लेखकपाठकयोः शुभमस्तु । लिखितं रामपुरमध्ये । रामपुरा वसन्तराय कौ । लिखौ बांचौ जाकौ रामराम बाँचियौ पुनः पुनः ।।

163. गुणदूतकाव्यम् by नीलकण्ठ

Opening :

श्रीविश्वेशपदारविन्दयुगलध्याने कवित्वाशयः
ज्ञाने दानविधौ पराक्रम इव श्लाघ्यः पितेवास्तियः ।

दूत्ये सूक्तगुणं नियोक्तुमनसस्तं रामसिंहं कृते
प्रोद्दामां मुदमातनोतु भवतां वाग्देवतेयं मम ।।१।।
आस्ते यद्यपि पाणिनीयचरणता काव्येषु सर्वङ्कषा
स्फूर्तिर्धर्मविनिर्णये निपुणता वेदेऽपि कोऽपि श्रमः ।
त्रिष्वेतेष्वतिदूरदेशविलसद्दात्री प्रसङ्गोद्यमे
भ्रातः सूक्तगुण त्वमेव निपुणस्त्वामेव तत्प्रार्थये ।।२।।
बन्धो काव्यवसुन्धराधिपतयो ये ये त्वया वीक्षिता-
स्तेषां प्रत्ययतो निरुद्यमतया स्थातुं न ते युज्यते ।
एतां विष्णुमिवाखिलं त्रिभुवनं संवेष्टयन्तीं पुरः
किं नो पश्यसि कच्छपान्वयमणेः कीर्तिं त्वदुद्वेजिकाम् ।।४।।
वाणीविभ्रमरामसिंहसदसि प्राप्तप्रतिष्ठस्य ते
प्रौढस्याप्यधिकैव काऽपि भविता प्रौढिर्ययाशु त्वया ।
लब्धव्या भवभूतिबाणहनुमत्क्षेमेन्द्रनारायण-
श्रीहर्षामरराजशेखरमुखश्रीमत्कवित्वोपमा ।।६।।
अस्माद्राजपुरात्त्वया प्रचलता मत्कार्यसिद्धयै सखे !
द्रष्टव्य. प्रथमं चराचरगुरुः श्रीनीलकण्ठाभिधः ।
मुक्तिस्त्रीस्तनमण्डलं सुविपुलं यं पाणिना संस्पृशन्
पौलोमिस्तनमण्डलेऽपि न रतिं बध्नात्यभिज्ञोजनः ।।९।।

Closing :

इत्येवं नीलकण्ठो निजगुणमन्यद्दूततामेष दौत्यं
कृत्वाज्ञां प्राप्य कूर्मान्वयतिलकमणेस्तं सभामानिनाय ।
सोऽप्यागत्य प्रदर्श्य स्वगुणमथ कृतार्थो यथासीत्तथान्यान्
कुर्वाणोऽयं कृतार्थानधिमहि सुचिरं जीवताद्रामसिंहः ।।१४३।।
त्रिदिवमपि विजेतुं प्रस्थितोत्साहसाङ्कद्गुणवति विशिखेन्दुक्ष्माधरक्ष्मामितेऽब्दे ।(१७१५)
नभसि विशदपक्षे पच्छतौ नीलकण्ठोऽगमयत गुणदूतं नाम काव्यं समाप्तिम् ।।१४४।।

Colophon :

इति नीलकण्ठकविकल्पितं गुणदूताभिधानं काव्यं शिवार्पणमस्तु ।।

387. **गोकुलनाथसूक्तिकथा (आख्यायिका)** by **गोकुलनाथ**

Opening :

**चिरपरिभ्रमणनिर्भरश्रमशिथिलपदक्रमो भ्रमरयुवाननन्नृवनप्राचीरकेतककुसुमदलद्रोणिषु दीर्घ-तरदयितजनविरहदवाग्न्युद्वनाध्वनीनबन्धनसिन्धवः परागपटलसैकतान्तरितशीतस्वादुमधुसलिलप्रवाहा**

वहन्तीति विचिन्त्य विततपक्षपुटमाकुञ्चितचरणचयमवाञ्चितग्रीवमत्यायतश्वासवेल्लदधरदलपुट-गर्भितव्यायामव्यथाविर्भावकुण्ठितमस्पन्दमानो निषसाद, विश्रम्य तु कियतो निमेषानविरलपदन्यास-चित्रितपद्धतीनि कतिपयानि पदानि गत्वा मध्यमिदं मधुस्रोतसो नूनमत्र कूपिकाखातोपलभ्यममृत-स्वादु शीतलं सलिलमिति मत्वा चरणचतुष्टयेन भुवमवष्टभ्य पादद्वयेन परागसिकतामपस्किरमाणो यथा यथा नालभत रसलवमनार्द्रविरसाभिरुद्धूतबहलधूलिधोरणाभिरन्धतामनीयत तथा तथा बलवदुदन्यावशापहसितविवेको विनिपातमगणयन्नुत्क्षिप्य षडपि चरणान् पक्षयुगेन भुवमवलम्ब्य निखनन्मुखेनानुप्रविश्य स्फटिकशिलापट्टकठिनदलतलप्रतिहतव्यवसायबन्ध्यमनोरथो दैवमात्मानं चोपालभ्य निसर्गधीरेणात्मना गगनमुदपतत् ।

Closing :

निगमनिधयो ब्राह्मीं वाचं विवेचयितुं क्षमा-
श्चरणगुरवस्तोमास्वादात् कषायमुखाद्विजाः ।
हितमितगिरो वंशे वात्स्यायनस्य महा
मुनेर्बुधपरिषदः कस्य श्लाघ्या न वाजसनेयिनः ॥१॥
निगमसरसो माने दण्डाः प्रमत्तसरस्वती
स्खलनपतमारम्भे हस्तावलम्बनयष्टयः ।
सुकृतसदनोपादानं ते भवन्ति भजन्ति ये
रविपतिकवेर्वंशस्तम्बप्ररोहकरीरताम् ॥२॥
रविपतिकवेराविर्भूतो विवेकवताम्वरो
रुचिपतिरसौ ब्रह्माभ्यासान्महामुनितामगात् ।
हरिहरसुधीस्तत्पुत्रोऽभूत्ततश्च परं जनु
स्सुचरितमयं लेभे श्रीरामभद्रबुधाधिपः ॥३॥
सकलविद्वद्ब्रह्माद्वैतप्रबन्धविचक्षणः
सुचरितगुरुर्न्यायाचार्यो विषास्थ्यविदां वरः ।
अलभत ततस्तातः पीताम्बरो जनुरेषय-
न्नवनिधि कविस्तस्माद्विद्यानिधिर्व्यपदेशभाक् ॥४॥
रुचिपतिकुले जन्म श्लाघ्यं द्वयोरुभयोः सुताः
परविजयिनश्चत्वारो द्वौ नयागमपारगौ ।
त्रिभुवनमुभौ कीर्तेर्भासा विभासयितुं प्रभूं
दशरथनृपः सोऽसौ विद्यानिधिर्वदतांवरः ॥५॥
प्रकृतिगहने तन्त्रे वैशेषिके विवृतिं व्यधात्
सुरतरुचतुर्वर्गव्याख्यानमेव च भारते ।
भरतवचसां तत्त्वख्यात्यै निबन्धमभावयत्
व्यतनुत न कास्तातो वाणीविलासकविः कथाः ॥६॥

हितमपरुषं मृद्वद्ग्राम्यं मितं बहुगोचरं
सरलविषयं व्यक्त्यावक्रं विशुद्धमलङ्कृतम् ।
दशभगुणसंख्यातोत्कर्षं विचित्रिमभूद्वचो
ममपितुरुमाभर्तुः पीताम्बरस्य वशंवदन् ।।७।।
न परुषपदा नग्राम्या नच्युतक्रमसंस्कृति-
र्नरसरहिताश्लीला नासौ प्रसिद्धिविरोधिनी ।
न जनितपरोद्वेगा न स्तोकमप्यनृतस्थिता
प्रकृतिगदिताप्यासीद्विद्यानिधेर्विबुधस्य वाक् ।।८।।
अशरणमभूद्ब्राह्मं वर्चोनिरन्धनमैधत
ज्वर इव भुवो देव्या दुःसंवरः कलिसंज्वरः ।
अभजत कथाशेषो धर्मः परैरुपहास्यता-
म्मनुनयदाता या तो विद्यानिधिर्द्विगुरुं दिवम् ।।९।।
अवितथवचो बन्धे चिन्तावशंवद वाङ्मये
विदितनिखिलविद्या विद्यानिधौ दिवमीयुषि ।
इयमशरणा वाचा देवी लभेत कमाश्रयं
विदितमथवा कृष्णद्वैपायनो भुवि जीवति ।।१०।।
विबुधपरिषत्पूज्याः पञ्चप्रकामविभूतयः
सुकृततरवो जाता ये रामभद्रतपस्विनः ।
कथमपि तुलां विभ्रत्वेषामकोमलदारुणो
पचितवपुषो दर्पस्तब्धासुरालयपादपाः ।।११।।
अधिगतमुपाध्यायाद्विद्यानिधेरनुचिन्तित
विरलविषयग्राहिणापि स्वया जडया धिया ।
बहुलमथवा स्तोकं यद्यन्मया श्रुतमर्जितं
परिणतिरियं तस्य प्रीत्यै फतेपतिभूपतेः ।।१२।।

Colophon :

इति श्रीगोकुलनाथसूक्तौ कथायां सप्तमाख्यानकमाख्यायिका च समाप्ता ।।

श्रीरघुनाथाय नमः ।। सवत् १७५२ वर्षे ज्येष्ठमासे शुक्लपक्षे प्रतिपत्तिथौ गुदने गोलवालज्ञातीयदेवदत्तेन लिखितम् ।

## 318. घटखर्परलरघुकायव्टीका by लक्ष्मीनिवास

Opening :

दुष्करं हि तपस्तप्त्वा, जिता रागादयो भटाः ।
येन तस्मै नमस्यामो, भुवन ख्यातकीर्तये ।।१।।

सत्कीर्त्या हि समाश्रितः सुविदितस्तत्तत्तपस्तेजसा
दुष्कर्मद्विपपाटने मृगपतिर्वाचा पटिष्ठः सुधीः ।
श्रीजैनेन्द्रमताभ्रदीपनदिवानाथो गुणग्रामणीः
श्रीरत्नप्रभसूरिराट् दिशतु मे प्रज्ञाप्रकर्षं मुदा ।।२।।
काव्यकर्तुः क्व काव्यानि क्व मे बुद्धिरपाटवा ।
तदेतद्दीपमात्रेण भुवनानां प्रकाशनम् ।।३।।
तथापि टीकां कुर्वाणो नोपालभ्यो विचक्षणैः
जल्पन् शिशुर्यथा दोषं नोपालभ्यो भवेज्जनैः ।।४।।
करोमि लघुकाव्येषु टीकां सौष्ठवशालिनीम् ।
श्रीमल्लक्ष्मीनिवासोऽहं नाम्ना शिष्यहितैषिणीम् ।।५।।

यतो गिरिनगरसरित्सरोवरवसन्तोत्सवमलयानिलार्कचन्द्रोदयपुष्पावचयजलकेलिसुरापानसुरत-केलिमन्त्रदूतप्रयाणाद्या भावा लेशतो व्यावर्णिताः । सत्येषु पञ्चसु काव्येषु अतो लघकाव्यानि उच्यन्ते । अत्र च कविर्वर्षाकालमाश्रित्य विप्रलम्भरसं वर्णयन्निदमाह—

निचितं खमुपेत्य नीरदैः प्रियहीना हृदयावनीरदैः
सलिलैर्निहितं रजः क्षितौ रविचन्द्रावपि नोपलक्षितौ ।।१।।

व्याख्या—नीरदैः जलधरैः कर्तृभूतैरुपेत्य समागत्य खं नभः निचितं आच्छादितं, किंविशिष्टैः नीरदैः प्रियहीना हृदयावनीरदैः प्रियहीना वल्लभजनरहिता या स्त्री तस्याः हृदयं तदेवावनी भूमिः रद विलेखने तां रदंति विलिखन्ति ये मेघास्तैः पानीयैः क्षितौ पृथिव्यां रजो धूलिर्निहित विनाशितं, रवि-चन्द्रावपि सूर्यशशाङ्कावपि नोपलक्षितौ न दृष्टावित्यर्थः, मेघागमे ये ये भावाः सपद्यन्ते तानाह ।।१।।

Closing :

भावानुरक्तवनितासुरतैः स पेय–मालभ्य चाम्बुतृषितः करकोशपेयं
जीयेय येन कविना यमकैः परेण तस्मै वहेयमुदकं घटकर्प्परेण ।।२२।।

व्याख्या—येन अन्येन कविना विदुषा अहं जीयेय पराभूयेय कैः कृत्वा यमकैः यमकग्रथित-कवित्वैः तस्मै कवये अहमुदकं जलं वहेयं वहामि, केन कृत्वा जल वहामि घटर्प्परेण । अन्यच्च यदा येन कविना अहं जीयेय तदा तद्दिनमारभ्य भावानुरक्तवनितासुरतैरहं शपेयं अयमभिप्रायः स्नेहानुरक्तवनिता स्वयं नारीषु न गच्छेयमित्यर्थः च पुनस्तदा तृषितः सन्नहं अम्बुजलमालभ्य प्रप्पेन पिबामीत्यर्थः । किं विशिष्टमम्बु करकोशपेयं करकोशेन हस्तमुकुलेन पीयते यत् करकोशपेयं हस्तमुकुलपातव्यमित्यर्थः ।।२।।

Colophon :

श्रीवृद्धगच्छाम्बुधिपूर्णचन्द्रो रत्नप्रभः सूरिवरो विभाति ।
तदन्ति वेद्योऽस्ति रमानिवासो ऽकरोत् स टीकां प्रथमेऽत्र काव्ये ।।
इति घटकर्प्परटीका लक्ष्मीनिवासकृता समाप्ता ।।१।।

630. छन्दोगोपालम् by काशीनाथ

Opening : श्रीमङ्गलमूर्तये नमः ।।

गोपारामं सरामं परशिवविभवं कामपूरन्नतानां
दुर्ज्ञेयं वेदविज्ञैरपि पथिकपथायासनाशैकशूरम् ।
कालव्यालापलापं सकलगुणगणैर्विश्वमामोदयन्तं
शान्तं शान्तैकमित्रं कमपिसुखमयं कल्पवृक्षं नमामि ।।१।।
ऊचे गोपिकया पृष्टो हृष्टो मन्दस्मितं हरिः ।
मध्येवृन्दावनं छन्दः समासेनोपपर्वतम् ।।२।।
संयोगपूर्वोऽनुस्वारी सर्गो दीर्घो गुरुर्भवेत् ।
पादस्यान्ते विकल्पेन वर्गः प्रेह्ले परे तथा ।।३।।
यतिर्जिह्वेष्टविश्रामस्थानं कविभिरिष्यते ।
छन्दो जिह्वा विजानीते वदत्येवं हि पिङ्गलः ।।४।।

Closing :

वृत्तैकदेशसम्बन्धाद् वृत्तगन्धि स्मृतं बुधैः । यस्मिन् वृत्ते श्लोकस्यैकपादो भवति तद्वृत्तगन्धि-कथ्यते ।। तद्यथा—

जयश्रीजगतीबन्धो प्रलयपयोनिधिविहारविहितमत्स्यावतार, विपुलतरमन्दरधराधरसञ्चार-निद्रायमाणनयन कमठ, संहृतरसातलतलगतमहीमण्डलमण्डितदशनशिखर महावराह, खरतरनखर-शिखरविदारितहिरण्यकशिपुवक्षस्कपाट श्रीनृसिंह, चरणनलिनविगलितमन्दाकिनीपाविताशेषसंसार महावामन, भूदेववेदविनिन्दकराजन्यसङ्घसंहारक श्रीपरशुराम, दशमुखदशमस्तकोपहारसंतोषित-दशदिशापाल श्रीरामचन्द्र, लम्बायमानप्रलम्बाद्दिदानवकदम्बसंहारक श्रीबलदेव, वेदविहितधर्म-कर्मपरायणदानवविमोहनकारणकृत बुद्धावतार, सकलप्रजाधनजनपुत्रपुत्रीवनितापहारकयवनजालकाल कल्किकलेवर, परमपुरुषोत्तमयादवेन्द्र जय जयेति मधुरया गिरा प्रणतायात्मानमपि ददामीति सङ्कल्पः ।

Colophon :

इति छन्दोगोपाले काशीनाथकृतौ गद्यनिरूपणो नाम चतुर्थः परिच्छेदः ।।

समाप्तोऽयं छन्दोगोपालनामा ग्रन्थः ।। संवत् १७१३ वर्षे माघशुद्ध ९ बुधे लिखितः ।।

There is an overwriting on the Samwat. The following couplet is written on tne cover page :—

काश्येका सृजति प्रतिक्षणमियं रुद्रानुमुद्रां ततः
काञ्चीतस्तव भीस्तु संहृतिकृता युक्तैव भीतिर्मम ।
पुर्यः पञ्च न सन्ति किं प्रतिपुरि प्रत्यग्र कृष्णा न किं
किन्नाब्जे प्रतिकृष्णनाभि न पुनः प्रत्यब्जमन्योविधिः ।।

5509· जन्मपत्रीसङ्ग्रहः (कुण्लीसङ्ग्रहः)

| Name | Date of birth |
|---|---|
| (i) श्री रामचन्द्र | |
| (ii) श्री कृष्णा चन्द्र | |
| 1. म. मानसिंह | पौ. बु. १३,१६०७ वि. |
| 2. म. भावसिंह | आश्विन कृ. २,१६३३ वि. |
| 3. म. महासिंह | आश्विन कृ.१२,१६४२वि. |
| 4. म. जयसिंह (मिर्जा) | आषाढ़ कृ. १,१६६८ वि. |
| 5. म. रामसिंह (प्र.) | भा.कृ. ५, १६९२ वि. |
| 6. म. कु. कीरतसिंह | फा.सु. ५, १६९४ वि. |
| 7. म. कु. कृष्णासिंह | भा.कृ. ९, १७११ वि. |
| 8. म. विष्णुसिंह | जे.कृ. १३,१७२८ वि. |
| 9. पण्डितराय | पौ.शु. १४, १६८७ वि. |
| 10. कु. दीपसिंह (महासिंहात्मज) | आश्विन शु.११,१७०१वि. |
| 11. कीरतसिंह का पुत्र | मार्ग. कृ. १३,१७१३ वि. |
| 12. स. जयसिंह | मार्ग. कृ. ६, १७४५ वि. |
| 13. चीमाजी | चै. शु. ६, १७४७ वि. |
| 14. ईश्वरीसिंहजी | फा.शु. ८,१७७८ वि. |
| 15. ईश्वरीसिंह-पुत्र | भा. शु. ९, १७९८ वि. |
| 16. माधोसिंह (प्र.) | पौ.कृ. १२, १७८५ वि. |
| 17. पृथ्वीसिंह | माघ कृ. १४,१८१९ वि. |
| 18. प्रतापसिंह | पौ.कृ. २, १८२१ वि. |
| 19. प्रतापसिंह पुत्र (भट्टयाणीजीकुक्षौ) | चै.कृ. ११, १८४२ वि. (वाद में लिखी गई) |
| 20. माजी राणावतजी (महाराणा अमर-सिंहपुत्री) | पौ.कृ. ११,१७७४ वि. |
| 21. महाराणी यादवजी (आनन्दपाल पुत्री) | जे.कृ. ४, १७७८ वि. |
| 22. महाराणी वीर-पुरीजी (जैतसिंह पुत्री) | का.कृ. ३,१७८१ वि. |
| 23. महाराणी सीसोदणीजी (राजा सुलतान-सिंह पुत्री) | जे.कृ. ५,१७८१ वि. |
| 24. महाराणी सगतावतजी (कु. किशोरसिंह-पुत्री) | फा.कृ. ५,१७७७ वि. |
| 25. महाराणी बीकावतजी (सबलसिंह पुत्री) | मार्ग. शु. ७, १७७७ वि. |
| 26. महाराणी चूंडावतजी (रावत जसवन्त सिंह पुत्री) | माघ कृ. १३,१७८७ वि. |
| 27. हरि कुँवरि बाई (महाराजा-धिराज पुत्री) | पौ.कृ. ९, १७६६ वि. |
| 28. बड़ी बाई चित्र-कुंवरि | भा.कृ. १०, १७६८ वि. |
| 29. ब्रजकुंवरि बाई | भा.कृ. १४, १७८१ |
| 30. महाराणी राठौड़ जी की कन्या | मार्ग कृ. १२, १७९६ वि. |
| 31. फूलकुंवरबाई (महाराजा-धिराज पुत्री) | वै.कृ. ६, १७९३ वि. |

| Name | Date of birth |
|---|---|
| 32- महाराजाधिराज कन्या | वै.कृ. ६, १७७३ वि. |
| 33. नारद पुरोहित | फा.शु. ३, १६४८ वि. |
| 34. दीवान महेशदास | आश्विन कृ.५,१६५६ वि. |
| 35. दीवान अजीतदास | श्रा.शु. १५, १७०२ वि. |
| 36. संघही मोहनदास | श्रा.शु. ५, १६५४ वि. |
| 37. दीवान राजाराम | माघ शु. १३, १६७८ वि. |
| 38 दीवान द्वारकादास | श्रा.कृ. ५, १६५८ वि. |
| 39. संघी कल्याणदास | भा.कृ. ६, १६८४ वि. |
| 40. सघी गोवर्द्धनदास | फा.शु. ४, १६९८ वि. |
| 41. रामदास | चै.शु. १०, १७०७ वि. |
| 42. भिखारीरास (राजाराम-पुत्र) | का.शु. ५, १७०६ वि. |
| 43. दीवाण हृदयराम | आषाढ़ कृ. ३, १६८६ वि. |
| 44. दीवान किशोरदास | माघ.शु. ११, १७१२ वि. |
| 45. लालजी पुरोहित | श्रा.शु. १२, १६९१ वि. |
| 46. गिरधर भट | मार्ग.कृ. ६, १६८९ वि. |
| 47. गणेश ज्योतिषी | का.कृ. १०, १६९७ वि. |
| 48. रामदत्त (रामदास पुत्र) | फा.शु. २, १७०१ वि. |
| 49. हरिदत्त (द्वारकानाथ पुत्र | का.कृ. ११, १६०९ |
| 50. वैद्यनाथ मिश्र-पुत्र | फा.कृ. १०,१७२४ वि. |
| 51. राव शिवदास | जे.कृ. ३०, १६४१ वि. |
| 52. नाथूराम पुरोहित-(नारद पुत्र) | भा.शु. ६, १७०७ वि. |
| 53. आनन्दराम पुरोहित | श्रा.शु. १३, १७१० वि. |
| 54. दीवाण विद्याधर | वै.शु. १०, १७५० वि. |

| Name | Date of birth |
|---|---|
| 55. दीवान शाह बलू | माघ शु. ९, १६६० वि. |
| 56 बालकृष्ण शेखावत | भा.शु. ११,१६८४ वि. |
| 57. दीपसिंह | आश्विन शु. ११,१७०१वि. |
| 58. राव रायसल शेखावत | फा.कृ.८, १५६५ वि. |
| 59. राजा जगन्नाथ | माघ शु. ९, १६०९ वि. |
| 60. प्रतापसिंह | आश्विन कृ.१४,१६२६वि. |
| 61. भोजराज शेखावत | भा.शु. ११, १६२४ वि. |
| 62. विहारीदास नाथावत | पौ.शु. १४,१६३३ वि. |
| 63. भोजराज खंगारोत | भा.शु. १०, १६६१ वि. |
| 64. रामसाह नाथावत | फा.कृ. २, १६९० वि. |
| 65. फतेसिंह | आषाढ़ शु. ३,१६६९ वि. |
| 66. उग्रसिंह (राव कल्याणपुत्र) | पौ.शु. ९, १६९७ वि. |
| 67. कुशलसिंह | पौ.शु. १४, १६६७ वि. |
| 68. राजा रतनसिंह शेखावत | श्राशु.. ३, १६८८ वि. |
| 69. हठीसिंह (रावउग्रसिंहपुत्र) | मार्ग.शु.५,१७२५ वि. |
| 70. राव रतनसिंह | जे.शु.१०,१६१८ वि. |
| 71. मुकुन्ददास (कल्याणरायपुत्र) | भा.कृ.१३,१६९८ वि. |
| 72. राय भगोतीदास | वै.कृ.५,१६४७ वि. |
| 73. माधोसिंह (रावरतनसिंहपुत्र) | जे.कृ.३,१६५६ वि. |
| 74. राय जगन्नाथ | भा.कृ.१०,१६६३ वि. |
| 75 राय मुकुन्द | वै.शु.४,१६३५ वि. |
| 76. सुखसिंह | पौ.कृ.११,१६९३ वि. |
| 77. सबलसिंह (सूरसिंहपुत्र) | पौ.शु.१२,१७०७ वि. |

| Name | Date of birth |
|---|---|
| 78. रणसिंह | आश्विन कृ.५,१६६० वि. |
| 79. महासिंह | मार्ग.कृ.४,१६५८ वि. |
| 80. राजसिंह (रणसिंहपुत्र) | श्रा.शु.१०,१६१४ वि. |
| 81. माधवसिंह | प्र.भा.कृ.७,१६६२ वि. |
| 82. अर्जुनसिंह नाथावत | का.शु ७,१६६० वि. |
| 83. शिवसिंह | आषाढ़शु.६,१७०६ वि. |
| 84. हरिसिंह खंगारोत | श्रा.कृ.१४,१६०५ वि. |
| 85. हठीसिंह शेखावत (दीपसिंहपुत्र) | मार्ग.शु.१४,१७१६ वि. |
| 86. समरसिंह नाथावत (फतहसिंहपुत्र) | जे.शु.१३,१७२५ वि. |
| 87. प्रेमसिंह शेखावत (रतनसिंहपुत्र) | श्रा.शु.५.१७१३ वि. |
| 88. महासिंह शेखावत | श्रा.कृ.४,१७४० वि. |
| 89. महाराजा जसवन्तसिंह राठौड़ | माघ कृ.४,१६८३ वि. |
| 90. म. रायसिंह (अमरसिंहपुत्र) | आश्विन शु.१०,१६६० वि. |
| 91. माधोसिंह | प्र.भा.कृ.७,१६६२ वि. |
| 92. म. गजसिंह राठोड़,बीकानेर | का.शु.८,१६५२ वि. |
| 93. म. अमरसिंह राठोड़ | पौ.शु.११,१६७० वि. |
| 94. राजा रतन शेखावत | श्रा.शु.३,१६८८वि. |
| 95. रायसल | फा.कृ.८,१५६५ वि. |
| 96. ईश्वरीसिंह (अमरसिंहपुत्र) | द्वि.जे.कृ.१३,१६६८ वि. |
| 97. अजीतसिंह राठोड़ (जसवन्तसिंहपुत्र) | चै.कृ.४,१७३५ वि. (कुण्डली नहीं) |
| 98. राजा भगतसिंह, जालोर | भा.कृ.७,१७६३ वि. |

| Name | Date of birth |
|---|---|
| 99. राजा रायसिंह टोड़ा का | श्रा.कृ.३०,१६६५ वि. |
| 100. बद्रीदास राठौड़ (गोविन्ददासपुत्र) | चै.शु.१०,१६६६ वि. |
| 101. जगतसिंह (म.जसवन्तसिंहपुत्र) | माघ कृ.३,१७२३ वि. |
| 102. म.अभयसिंह | मार्ग.कृ.१४,१७५६ वि. |
| 103. राजा राजसिंह रूपनगर | का.शु.१३,१७३... ? |
| 104. राजा किशोरसिंह, जोधपुर | आश्विन कृ.११,१७६६वि. |
| 105. अनोपसिंह राठौड़ (रूपसिंहपुत्र) | का.शु.१५,१७०८ वि. |
| 106. कँवर सावतसिंह (राजमहल) | मार्ग. शु. ११,१७५७ वि० |
| 107. कंवर बहादुरसिंह | पौ.कृ.११,१७६८ वि. (जन्म लाहौर में) |
| 108. राजा रायसिंह, बीकानेर | श्रा.कृ.१२,१५६६ वि. |
| 109. राजा सूरसिंह बीकानेर | पौ.कृ.१२,१६५१ वि. |
| 110. राजा करणसिंह | श्रा.शु.५,१६७३ वि. |
| 111. अनोपसिंह (करणसिंहपुत्र) | चै.शु.६,१६६५ वि. |
| 112. राजा केसरीसिंह | माघ शु.१३,१६६७ वि. |
| 113. देवीसिंह | आश्विन कृ.३०,१७०० वि. |
| 114. राणा अमरसिंह | चै.शु.७,१६१६ वि. |
| 115. राणा करणसिंह | श्रा.शु १२,१६४० वि. |
| 116. राणा राजसिंह | का.कृ.२,१६६६ वि. |
| 117. राणा जगतसिंह (संग्रामसिंहपुत्र) | आश्विन कृ.१०,१७६६ वि. |

| Name | Date of birth |
|---|---|
| 118. राजा श्री नाथजी उदयपुर | फा.शु १५.१७७२ वि. |
| 119. प्रतापसिंह (राणा जगतसिंहपुत्र) | भा.कृ.२,१७८१ वि. |
| 120. रावशिवसिंहपुत्र | भा.शु.१०,१७६४ वि. |
| 121. रावजालिमसिंह-पुत्र | द्वि.अश्विनकृ.४,१७६० वि. |
| 122. हाड़ा माधोसिंह | जे.कृ.३,१६५६ वि. |
| 123. हाड़ा मुकुन्दसिंह | पौ.शु.१२,१६८६ वि. |
| 124. हाड़ा बलीराम | जे.कृ.३,१६६० वि. |
| 125. हाड़ा इन्द्रसिंह | जे.कृ.११,१६६५ वि. |
| 126. रावदुर्जनसिंहहाड़ा | का.शु.६,१७६५ वि. |
| 127. रावराजा दलेलसिंह हाड़ा | मार्ग कृ.४,१७७० वि. |
| 128. रावराजा दलेलसिंहपुत्र | माघशु.७,१७८९ वि. |
| 129. राजाविट्ठलदास गौड़ | श्रा.कृ.३०,१६५५ वि. |
| 130. राजा कृष्णदास | श्रा.कृ.१४,१६०७वि. |
| 131. प्रयागदास | भा.कृ.१,१७०६ वि. |
| 132. शिवाजी (साहूपुत्र) | चै.कृ.४,१६८६ वि. |
| 133. विक्रमादित्य (धीरजसिंहखींचीपुत्र) | मार्ग.शु.१,१७५९ वि. |
| 134. म. बाघजी | भा.कृ.११,१६८३ वि. |
| 135. म. जगतराजदेव | मार्ग.कृ.७,१६४५ वि. |
| 136. म. हिम्मतसिंह | चै.शु.९,१७६३ वि. |
| 137. रायसिंह | माघ कृ.१२,१७७७ वि. |
| 138. बाघेला अमरसिंह | चै.शु.१३,१७६० वि. |
| 139. जुझारसिंह बुंदेला | आश्विन शु.७,१६९५ वि. |
| 140. जुझारसिंह | आश्विन शु.११,१६६६ वि. |
| 141. पहाड़सिंह | पौ.कृ.१३,१६४८ वि. |

| Name | Date of birth |
|---|---|
| 142. राजा भरतसिंह | आश्विन शु.८,१६४८ वि. |
| 143. वैरीसाल (गोपीनाथपुत्र) | का.शु.१२,१६६६ वि. |
| 144. राजारूपचन्द (गोपाचल स्थाने) | आश्विनशु. ५,१६३९ वि. |
| 145. राजा वसु | १६२७ वि. |
| 146. राजा तिलोकचन्द | फा.शु.१५,१६३६ वि. |
| 147. राजा जगतसिंह (वसुपुत्र) | मार्ग.कृ.८,१६५१ वि. |
| 148. गोपालदास | फा.शु.१३,१६८८ वि. |
| 149. राजा रामचन्द्र | श्रा.शु.९,१६६४ वि. |
| 150. जयराम | चै.कृ.९, १६६० वि. |
| 151. प्रतापसिंह | का.कृ.१४,१६८३ वि. |
| 152. चन्द्रमणि | आश्विन शु.१२,१६५१वि. |
| 153. गोस्वामीपुरुषोत्तम | वै.शु.११,१६०५ वि. |
| 154. गोस्वामीचिद्रूपजी | फा.कृ.११,१६१५ वि. |
| 155. गोस्वामी रामचन्द्रजी | भा.शु.५,१५९८ वि. |
| 156. राजा चन्द्रसिंह की पुत्री | श्रा.शु.७,१७९० वि. |
| 157. राव शिवसिंह | जे.कृ.७,१७६८ वि. |
| 158. अकबर बादशाह | का.शु.६,१५९९ वि. |
| 159. जहाँगीर बादशाह | आश्विनकृ.५,१६२६ वि. |
| 160. शहाजादा मुरादबख्श | आषाढ़शु.४,१६२७ वि. |
| 161. दानशाह | आश्विन शु.२,१६२९ वि. |
| 162. शाहजादा खुसरो | श्रा.शु.१३,१६४४ वि. |
| 163. शाहजादा परवेज | का.शु.४,१६४६ वि. |
| 164. बादशाह शाहजहाँ | माघ शु.१,१६४८ वि. |
| 165. शाहजादा दाराशिकोह | चै.कृ.३०,१६७१ वि. |
| 166. शाहजादा शुजा | श्रा.कृ.३,१६७३ वि. |
| 167. औरङ्गजेब | मार्ग.कृ.१,१६७५ वि. |
| 168. मुरादबख्श | का.कृ.११,१६८१ वि. |
| 169. सुलतान सलीम शीकोह (दाराशिकोहपुत्र) | चै.कृ.१,१६९१ वि. |

| Name | Date of birth |
|---|---|
| 170. सुलतान मुहम्मद शाह | पौ.शु.५,१६६६ वि. (हिजरी सन् १०५१) |
| 171. सुलतानसिपहरशिकोह (दाराशिकोहपुत्र) | आश्विन शु.११,१७०१वि० |
| 172. सदाकुंवर (शाहशुजापुत्र) | श्रा.शु.५,१७०२ वि. |
| 173. जैनउल्लाह वर्दिव (शाहशुजापुत्र) | मार्ग.शु.३,१७०२ वि. (हिजरी १०५६) |
| 174 जैनउल्लाह मर्दिव (शाहशुजापुत्र) | का.शु.३,१६६६ वि. |
| 175. अबूशाह (औरङ्गजेबपुत्र) | श्रा.कृ.१२,१७००वि० (हिजरी १०५४) |
| 176. मुरादबख्शपुत्र | द्वि.श्रा.कृ. ३०,१७०३ वि० (हिजरी १०५७) |
| 177. मुरादबख्शपुत्र | जे.शु.१२,१७०६ |
| 178. आजमशाह | आषाढ़ शु. १३,१७१०वि. (व्रध्नपुरे) |
| 179. मुरादबख्शपुत्र | वै.शु.१,१७०८ वि. |
| 180. मुहम्मदशाह बादशाह | भा.कृ.६,१७५६वि. |
| 181. मुहम्मदशाहपुत्र | पौ. कृ. ४, १७८६ वि. |
| 182. नवाब आसफखान | पौ. कृ. १०, १६३१ वि. |
| 183. नवाब शायस्ताखाँ (आसफखांपुत्र) | पौ. शु. ७, १६६२ वि. (अबू तालिब शाइस्ताखाँ) |
| 184. अबू सैयद | वै. शु. ४, १६५६ वि. |
| 185. असालदीखाँ | आषाढ़ कृ.११,१६६५ वि. |
| 186. बहमनयार (आसफखाँपुत्र) | माघ शु.१०,१६....? वि. |
| 187. नवाब सलावत खाँ | चै.कृ.१२.१६६६ वि. |
| 188. नवाब खवास खाँ | चै.कृ. ४,१६६६ वि. |
| 189. नवाब सादुल्ला खाँ | जे.शु. १५,१५४१ वि. |
| 190. नवाब जाफर खाँ | का.शु. १,१६६६ वि. |

| Name | Date of birth |
|---|---|
| 191. नवाब खानजहाँ पठान | अश्विन शु. ६,१६३....? वि. |
| 192. खानजहाँ | भा.शु. १४,१६५५ वि. |
| 193. नवाब खान दौरा | वै.शु. ३,१६४३ वि. |
| 194. नवाब महाबत खाँ | भा.शु. १२,१६१६ वि. |
| 195. नवाब अब्दुल्ला खाँ (असदुल्ला खाँ) | जे.शु. १,१६३१ वि. |
| 196. नलू हरास खानजादा | वै.शु. १,१६७१ वि. |
| 197. इरादती खाँ | माघ शु. ६,१६३३ वि. |
| 198. नवाब फाजिल खाँ | भा.कृ.१३, १६३६ वि. |
| 199. नवाब मीरा सैय्यद खाँ | श्रा.शु. १,१६४४ वि. |
| 200. नवाब बाकर खाँ | का.कृ. १,१६३३ वि. |
| 201. नवाब खानखाना | मार्ग शु. १४,१६२२वि. |
| 202. नवाब इसलाम खाँ | चै.शु. ४,१६४४ वि. |
| 203. नवाब रहवर खाँ | का.शु. ३,१६५६ वि. |
| 204. नवाब अलावर्दी खाँ | पौ.कृ. ११,१६४५ वि. |
| 205. शाहनवाजखाँ | जे.शु. १२,१६५८ वि. |
| 206. बहादुर खाँ | आश्विन शु.१३,१६६०वि. |
| 207. मीरजुनाब खाँ | आषाढ़ शु. ४,१६३७वि. |
| 208. नवाब अमीर खाँ | आश्विन कृ.१३,१६८८वि. |
| 209. नवाब सादुल्ला खाँ | जे. शु. ५,१६६६ वि. |
| 210. नवाब निजामउलमुल्क | श्रा. शु. १५,१६२६ वि.. |
| 211. नवाब कमर्दी खाँ | आषाढ़ कृ.३,१७७२ वि. |
| 212. दलेल हिम्मत | वै.कृ. ३.१६७० वि. |
| 213. मिर्जा बाहरवार | मार्ग. शु. ५,१६६७ वि. |
| 214. शकरुल्लाह | प्र.श्रा.कृ.१,१६७६वि. |
| 215. अबुलहसन खोजा | जे. बु. १३,१६३४वि. |
| 216. गरशाहजी | का. कृ. २,१६७८ वि. |
| 217. खुर्रम | मार्ग. शु. ३,१६१८ वि. |
| 218. आजम खान | मार्ग कृ. ४,१६३१ वि. |
| 219. दावल बख्श (खुसरोपुत्र) | जे. कृ. ८,१६६६ वि. |

| Name | Date of birth |
|---|---|
| 220. सादिक खाँ | पौ. शु. १३,१६२५ वि. |
| 221. खवास खाँ | भा. कृ. ६,१६३८ वि. |
| 222. निजामशाह | पौ. कृ. १४,१६६५ वि. |
| 223. इमावर्दी खाँ | माघ शु. ११,१६३७ वि. |
| 224. शाहजादी खानम् | मार्ग.शु. १०,१६२६वि. |
| 225. जाफर खाँ (सादिक खाँ पुत्र) | का.शु. ३,१६६६ वि. |
| 226. रोशन जमीर | आश्विन कृ.१२,१६६७वि. |
| 227. सुसावी खाँ | आ.कृ. १०,१६६६ वि. |
| 228. नवाब शास्ती खाँ | पौ.कृ. ६,१६६२ वि. |
| 229. सादुल्ला खाँ नवाब | जे.शु. ५,१६६६ वि. |
| 230. रुहेहसन | फा.शु. १२,१६६८ वि. |
| 231. सलहदी खाँ | माघ शु. ४,१६१७ वि. |
| 232. महाराजा विजय सिंह राठौड़, जोधपुर | मार्ग कृ. ११,१७८६ वि. |
| 233. पुष्पनारायणराव पुत्र, पून्या | वै.शु. ९,१८३१ वि. |
| 234. भीमसिंह राणा, उदयपुर | चै.कृ. ७,१८२५ वि. |
| 235. मिर्जा अमानिक | आश्विन शु.७.१८७? वि. |
| 236. गुमानसिंह राठौड़ (विजयसिंह पुत्र देवडीजीकुक्षौ) | का.शु. ८,१८१८ वि. |
| 237. राजा किशोर दासजी | ?? (केवल कुण्डलीहै) |
| 238. रामसिंहजी राठौड़ (जोधपुर) | भा. १०,१७८७ वि. |
| 239. हरगोविन्द नाटाणी | माघ कृ. ११,१७५५ वि. |
| 240. मन्सूर अली खाँ | माघ शु. १४,१७६१ वि. |
| 241. अहमदशाह पातशाह | पौ.कृ. ४,१७८४ वि. |
| 242. अलीगोहर बादशाह | ?? ....,१७८१ वि. |
| 243. बहादुरसिंहजी महाराजा किशनगढ़ | पौ.कृ. ११,१७६८ वि. |
| 244. महाराणी जादमजी (स. प्रतापसिंहपत्नी) | पौ.शु. १४,१८१८ वि. |

| Name | Date of birth |
|---|---|
| 245. महाराणी राणावतजी | का.शु. १२,१८२४ विं. |
| 246. महाराणी राठौड़जी (गुलाब कुँवर, निर्भयसिंह पुत्री) | माघकृ. ७,१८२० वि. |
| 247. महाराणीजी बड़ा चन्द्रावतजी | फा.कृ. ११.१८२४ वि. |
| 248. महाराणी छोटा चन्द्रावतजी | पौ.कृ. ७,१८२७ वि. |
| 249. रामदासजी (माधवसिंहजी की खवास का पुत्र) | माघकृ. १२,१८१७ वि. |
| 250. शिवदासजी (माधवसिंहजी की खवास का पुत्र | काशु. १०,१८२४ वि. |
| 251. शेरसिंह (विजयसिंहजी राठौड़ पुत्र) | आश्विन कृ. ५,१७१७वि. |
| 252. विजयसिंहजी राठौड़ पुत्र (राणी इन्द्रभणोत कुक्षौ) | फा.शु. ८,१८२४ वि. |
| 253. जालिम सिंहजी (विजयसिंह राठौड़ पुत्र) | आषाढ़ शु.६,१८०५ वि. |
| 254. राणाभीमसिंह, उदयपुर | चै.कृ. ७,१८२४ वि. |
| 255. स. प्रतापसिंहजी के जेष्ठ पुत्र (भट्याणीजी कुक्षौ) | चै.कृ. ११,१८४२ वि. |
| 256. म. प्रताप सिंहजी के कनिष्ठ पुत्र (बड़ा चन्द्रावत जी कुक्षौ) | का.कृ. ३,१८४८ वि. |
| 257. हरजी ठाकुर (हरनाथ पुत्र) | आषाढ़शु. ९,१७४७वि. |
| 258. उणियारावाला राव | मार्ग, कृ.४,१६५८ वि. |
| 259. बहू हाड़ी जी कन्या (महाराजागृहे) | जे.कृ. ७,१७९९ वि. |
| 260. वैद्यनाथमिश्र पुत्र | फा.कृ. १०,१७२७ वि. |
| 261. पण्डितराय | पौ.शु. १४,१६८७ वि. |
| 262. वैद्यनाथ नागर | वै.शु. ३,१६६३ वि. |
| 263. महारानी हाड़ीजी | पौ.शु. ५,१७७२ वि. |
| 264. घासीराम वैद्यपुत्र | वै.शु. ११,१६४९ वि. |

631. छन्दः सिद्धान्तभास्करः by केशवनन्द व्यास

Opening :

श्रीमत्पिङ्गलमानम्य तन्मतं परिभाव्य च

पदवाक्यप्रमाणज्ञसूरजिद्व्याससूनुना ।।१।।

केशवेनारुणेनैव भ्रान्तिध्वान्तान्त हेतवे ।

सुज्ञपदस्य सिद्धान्तभास्करोऽयं प्रकाश्यते ।।२।।

Closing & Colophon :

इति छन्दःसिद्धान्तभास्करे सूरजित्सूनुकेशवव्यासविरचिते मात्रासमकप्रकाशः ।।

Post colophonic:—जुमले खण्ड ३; लौकिक ४६: प्राकृत ×; वैदिक ४३+१३; पत्र १०२ ।

545. जयचम्पूः by गोपाल s/o दामोदर तैलङ्ग

Opening:—

गुरुमहिमानं देवं निजभासा भासमानं तम् ।

इष्टमनिष्टनिवृत्यै स्वेप्सितसिद्धयै च वन्देऽहम् ।।१।।

गुरौ कुर्वे गुर्वीं नमनततिमुर्वीतलपरि-

स्पृशन् मूर्द्धा श्रद्धादररतिनिबद्धामलमतिः ।

यतः स्वादु स्वादु स्फुरदमृतमास्वादितमलं

यशस्यं शस्यं वाग्विलसितमयं रस्यमतुलम् ।।२।।

Then there are eight verses in praise of Maharaja Man Singh, Maharaj kumar Jagat Singh and Maharaja Maha Singh.

तस्यात्मजः कुलकदम्बकुलाम्बुदोऽयमुद्भूतवैरितिमिरप्रशमप्रदीपः ।

यो जन्मनैव जयशालिकृती पृथिव्यां नाम्ना ततो विजयते जयसिंहदेवः ।।११।।

तस्यैवाद्भुतकर्मणः श्रुतगुणग्रामानुरागोदिता-

ऽमन्दामोदरसेन मे खलु रुचिर्यद्वर्णनायाभवत् ।

तच्चम्पूं सुयशःप्रतापरचनां चित्रां तनोम्युत्सुकः

साम्यश्लेषविरोधरूपकलसज्जात्यादिभिर्भूषिताम् ।।१२ ।

तत्र चायं विशेष :

श्रुत्वा यथा सुकवयः खलु वर्णयन्ति प्राचीनभूपचरितं न तथोच्यतेऽत्र ।

किन्तु स्फुटोद्यदनुरागभरान्नरेशे दृग्गोचरे सति मुदाहमुदाहरामि ।।१३।।

अथ जयति स महाराजाधिराजो भवान्निखिलराजमण्डलमौलिमण्डनमुकुटनमनाधः-प्रसृतानर्घमाणिक्यगणकिरणोत्करैःप्रियसङ्गमागतकमलबन्धुप्रभापटलैरिवानुरञ्जितचरणपङ्कजतलः, निजनिजमनोरथोद्भूतदर्शनोत्कलिकासमागतत्रिभुवनजनतोच्छलत्प्रेमपुलकितकितविहितभवदवलोकनावगततद्दैन्योद्भवत्करुणार्णवपूरकरिष्यमाणाभयदानज्ञापकसमस्तजनमस्तकोपरिधारणजनितकठिनस्पर्श-

नेवारुणमृदुकरकमलतलः, प्रचुरतरविविधापज्जनितसंतापदावानलज्वालदह्यमानशरणागतमानवगणा-वलोकनोद्भूतोल्लङ्घितमर्यादोच्छलत्पूरकरुणासागरप्रवृद्धपरिणाहविलासात्यायतश्रीसमालोकनसुखदसं-तापहारिनयनसरोजः, अतिकुटिलप्रबलरिपुपटलकठिनवक्षःकपाटोद्घाटनपटुवक्रोन्नतानतकुञ्चिकावदु-ल्लसद्भ्रकुटीतटः, अतिरुचिरामलतरोद्दीप्तदीप्तिसुधासारसंभृतत्रिभुवनभाग्यामरपादपाङ्कुरालवाल-सुभगतमोल्लसद्भालतलः, तिमिरततिप्रतिहतलोचनजगतीतलोद्योतकरशरदमलसकलकलापूर्णविराज-मानविधुबिम्बसदृशवदनमण्डलः, त्रिभुवनैकशोभावतारः,क्षितितलवलयैकभूषणः,सकलपृथ्वीपतिचक्रै-कचूड़ामणिः,निखिलजनरक्षणैकदीक्षितचक्रवर्ती सत्यसंधैकगुरुः श्रीजयसिंहनामा ।।

.... .... .... .... .... ....

Further he describes the qualities of the poets who adored M. Jai Singh's court:—

( f. 14a) ततश्च विविधविद्याविशारदाः सकलदेशागताः कवयो विरचित-विविधकाव्यप्रबन्धेन शब्दाडम्बरघनेनापि विहितरसासारेण अलङ्कारालङ्कृतेनापि यतिरूपधरेण आश्लेषसंयुक्तेनापि विरोधाभासितेन विधृतमृदुपदन्यासेनापि ध्वनिज्ञापितस्वगूढार्थेन गजतुरगबन्ध-सम्पन्नेनापि पदगतिसंगतेन सुवर्णमयेनापि रीतिप्रथितेन स्वोक्तसकललक्षणसंयुक्तेनापि अन्योक्ति-विख्यातेन अतिरुचिरवचनमाधुर्यविजितमृद्वीकेनापि नालिकेरपाकेन एवंविधानेकहृदयहारिरचनया च भवन्तं कीर्तयन्तः प्रीणयन्ति तत्र प्रथमं दर्शनमात्रेणैव सुधासेकेनेव निखिलकविकुमुदवृन्दमुल्लासयतः स्वकान्त्यैव सकलान्धकारं विध्वंसयतः कलानिधेस्तव हृदयमद्भुतत्वमुद्भावयन्ति ।

Closing :

द्युमणिर्द्योतते यावद्दिवि दीव्यति चन्द्रमाः ।
तावज्जयतु यस्येयं चम्पूर्विरचिता मया ।।६६।।

Colophon :

इति श्रीमत्तैलङ्गवरपञ्चनदान्वयोद्दामदामोदरसूनुकविगोपालविरचिता विजयवर्णनमनोरमा जय-चम्पूः सम्पूर्णा ।।शुभं भवतु।। संवत् १७१८ वर्षे वैशाख वदि ६ बुधे लिखितमिदं पुस्तकं विद्वज्जन-दर्शनाय ।।

It bears two seals, one in Persian (of the time of M. Jai Singh) dated 1059 A.H. and the other of M.K. Ram Singh dated 1718 V.S.

It is a contemporary copy. It appears that M.K. Ram Singh maintained the royal library of his father.

7281. जयसिंहप्रकाशशब्दशासनम् by सखारामपर्वणीकर

Opening :

नत्वा गुरुपदाम्भोजे स्मृत्वा स्मृत्वा च तद्वचः
सखारामेण विदुषा क्रियते शब्दशासनम् ।।

## 64. जानकीराघवम् by म. कु. रामसिंह

Opening :

केयं देव तवोत्तमाङ्गसुभगा पीयूषभानोः कला
तस्या अप्युपरि स्रगम्बुनिचयः कस्मात्तवेर्ष्याजुषः ।
पादान्ते प्रणते मयि प्रियतमे स्वेदाम्बुधाराऽभवत्
एषा सेति समाकलय्य गिरिजा नम्रानना पातु वः ।।१।।

अपि च–

कस्त्वं कासि भवान् स्वयं कथयतु प्राणेश्वरी कस्य मे
श्रीकण्ठः किमु ते निजः परिजनः प्राणेश्वरस्तद्भवान् ।
इत्थं मोहमुपेयुषो रसलवामासेदुषोः संविदम्
गौरीशङ्करयोः स्खलन्नवसुधाधारागिरः पातु वः ।।२।।

नान्द्यन्ते सूत्रधारः – अलमतिविस्तरेण (नेपथ्याभिमुखीभूय नटीमालक्ष्य) प्रिये! इतस्तावत् ।

नटी (प्रविश्य)–इअम्हि आणवेदु अज्जो ।

सूत्रधारः–प्रिये आदिष्टोऽस्मि नानादिग्देशागतैः श्रीरामनवमीयात्रोत्सुकैरसंख्यातसंख्यावद्भिर्यत्ताण्डव-मण्डनाचार्याकर्णितमेव युष्माभिः—

मध्याह्ने स मरीचिमालिकिरणप्रक्रान्तविक्रान्तभू-
र्धीरोदात्तगुणैरलङ्कृतमतिर्वैदग्ध्यदीक्षागुरुः ।
इक्ष्वाकोरिव मानसिंहनृपतेर्गोत्रे गुरोस्तेजसां
धारायां जयसिंहवीरतनयः श्रीरामसिंहप्रभुः ।।३।।

यमुद्दिश्य प्रतिदिशि प्रगायन्ति गाथाः कवयः –

*वतंसमरिकामिनीधरणिरेककर्णाङ्कितां
वृषः कलिजपङ्गुतां कमलया कलिं भारती ।
अनङ्गपदमुज्जहौ मदन उज्जिहाने क्षितौ
महीन्द्रजयसिंहजे जयति रामसिंहे प्रभौ ।।४।।

अपि च

देव्यौ वाचां विभूतेर्व्यपगतकलुषे यन्मिथः प्रेमरक्ते
कुर्वाते स्वैरलीलां ललितविलसितैर्नायके रामसिंहे ।
सृष्टिर्नव्या तु धातुः किमुत रतिगुरोः शिल्पसारः कवीनां
कान्तासौभाग्यकन्दाकरगुरुतपसामीदृशः किं विवर्त्तः ।।

परं विरमतु तावत् दुष्पारविषयो वाचाम्प्रपञ्चः । किंच श्रीमति मरकतमणिश्यामाभिरामे रामभद्रेऽनिशविषयिगुणानुगम्यमानचेतोवृत्तिसन्तानविधीयमानतादृग्वासनानुसन्धीयमानसपर्यापर्यायसतीर्थीकृतनृगनहुषभरतभगीरथाम्बरीषेण तेन विनिर्मितं जानकीराघवनाम नाटकं चेदार्यायै रोचते ?

---

* वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरिति सूत्रात् साधुः ।

नटी :—अज्ज सादु सम्हरिदं तुम्हे । (संस्कृतमाश्रित्य)

सा वक्रता साऽरुणता तदेव मौग्ध्यं प्रमाणांगगणे तथापि

कुमुद्वतीबन्धुकलावलोके नोत्साहिनः किं प्रतिमासि लोकाः ।।

× × ×

अत एव कवताऽनेन सविनयं बभाषे

यच्छस्यजातं कविकर्म नाम प्रणीतमाद्यैर्यदि तत्प्रवीणैः ।

(तर्हि) शिलोञ्छवृत्यापि कथं न भूयात् तेषामुपेक्षैव मयि प्रसादः ।।७।।

अन्यच्च

एकोर्थः प्रतिकवि भाति भिन्नरोचिः प्रायोऽन्याकलित इव प्रमोदहेतुः ।

यस्यां श्रीरघुपतिकीर्त्तिवर्णनायां तां जह्यात्स्वपरशुभानि कः समिच्छुः ।।८।।

Closing :

नेपथ्ये वैतालिकः

अये त्रिजगतीवासिनः पश्यन्तु जगन्मङ्गलम्–

आदाय मैथिलमहेन्द्रसुतां हुताशशुद्धां सुकाञ्चनमयीमिववेत्रयष्टिम् ।

प्रेमानुरागतपसां फलमेकक्रत्वः कर्तुं विवेश भरतस्य पुरीं स रामः ।।

अपि च

इतः परमास्तां भरतवाक्यं यथा–

अवनिरमरधुनीव धूर्विरिञ्चेः कुशजननी रघुनाथकीर्तिरेताः ।

अगदवपुरधिमानसं वः शुभमतिमात्मवतां दिशन्तु भूयः ।।

Colophon:

इति सरस्वतीकमलाकलानिर्यासार्णवकर्णधारमहाराजाकुमारश्रीरामसिंहविरचितेजानकीराघवनाम्नि नाटके कोसलाप्रवेशो नाम सप्तमोऽङ्कः ।। समाप्तश्चाऽयं ग्रन्थः ।। श्री रामाय नमः ।।

संवत् १७२१ ।।

वैशाखमास्यसिते पक्षे अष्टम्यां भृगुवासरे ।

लालाभिधेन लिखितं मुदे भवतु धीमताम् ।। ।।श्रीरस्तु।।

The drama depicts the story of Rama onwards Tadakā-vadha.

Aufrecht mentions one Janaki-Raghavam quoted in Sahitya-darpana and Trikandaviveka by Ramanath but does not mention the name of the author. Vishwanath, author of Sahityadarpana flourished in the 14th c.A.D. How could he quote from this drama then ? Krishnamachariar mentions Janaki Raghavam (dr.) by Yuvaraja Ram Singh, son of Jai Singh (1625 A.D.)

in the Nepal Library. The date of birth of Ram Singh, according to the Vamshavali in Pothikhana is Bhadrapada Vadi 5th, 1692 V.S. (1635 A.D.). He could not have composed a drama in 1625 A.D. (1682 V.S.).

In Sahitya–darpana (Parichhheda vi) the following verse has been quoted from Janaki-Raghava nataka as an example of Anumana, a भेद of प्रतिमुखसन्धि–

रामः–लीलागतैरपि तरङ्गयतो धरित्रीमालोकनैर्नमयतो जगतां शिरांसि ।
तस्यानुमापयति काञ्चनकान्तिगौरकायस्य सूर्यतनयत्वमधृष्यताञ्च ॥६८॥

The words 'नृपमानसिंहगोत्रे' and 'धारायां' (in verse 3) give rise to suspicion about the identity of this रामसिंह s/o जयसिंह। Was he a राजकुमार of धारा or आम्बेर? Should 'तेजसां धारायां' be interpreted to mean 'in the flood of glory'?

### 89. दमनमञ्जरी नाटिका by मोहन कवि

Opening:

पार्वत्या मौलिभूषारुणमणिमहसा रञ्जिते शूलपाणे
श्चूड़ाशीतांशुखण्डे प्रतिफलति कुचक्ष्माभृति स्वच्छभासि ।
प्रत्यग्रोद्यन्नखाङ्कभ्रमवलितदृशस्त पटीराच्छपङ्कै-
रावृण्वत्या पुनस्तद्द्विगुणसमुदये व्यग्रता वः पुनीताम् ॥१॥

अपि च

मौलौ चन्द्रकलां विलोक्य कुटिलां शम्भोर्द्विजिह्वं गले
पश्यन्त्या निभृतां कपर्दकुहरे गङ्गां सपत्नीमिव ।
देव्या नूतनसङ्गमे भगवतः प्राप्ते तपोभिः परै-
र्भीत्या मन्थरितो ह्रिया विलुलितो रत्युत्सवः पातु वः ॥२॥

.... .... .... ....

नान्द्यन्ते सूत्रधारः-अलमति विस्तरेण (समन्तादवलोक्य) अये सकलकलानिधानस्य चतुरम्भोधिमेखलाया मेदिन्या विजेतुरम्बावतीमहेन्द्रस्य महाराजाधिराज-श्रीमानसिंहदेवस्य परिषदेषा सुधर्मामतिशेते तथाह्यस्यां–

सर्वे विदग्धा रमणीयवेशाः सर्वेऽपि सर्वासु कलासु विज्ञाः ।
विज्ञायते नाम जनेन राजा सिंहाङ्कभाजा परमासनेन ॥

.... .... .... ....

प्रियतमे साधुनिर्दिष्टोऽस्मि (परिक्रम्याकाशे लक्ष्यं बद्ध्वा हस्तमुद्यम्य) भो भो आयुष्मन्तो जाङ्गलजानपदाधिनाथस्य सामन्तपारिषदाः एषोऽहं कर्णाटकुशीलवः श्रीमत्सङ्गीताचार्यान्तेवासी कलकण्ठो नाम मेदिनीमिलितमौलिरानम्य तत्रभवन्तो विज्ञापयामि वाञ्छामि खलु गान्धर्वविद्यायाः सुचिरपरिचयस्य फलतत्त्वं जिज्ञासुरायुष्मतां स्तोकावधानेनात्मानमनुग्राहयितुं रसविशेषनिवेश-प्रकाशेन च तदनुकूलं प्रबन्धं चाभिनेतुम्

.... .... .... .... .... ....

प्राणाधिके साधु स्मारितोऽस्मि

बीजी यस्य वटेश्वरो द्विजकुलालङ्कारचूडामणि-<br>स्तातः ख्यातयशाः कुशाग्रधिषणो धीरोऽनिरुद्धः कृती ।<br>यं प्रासूत नवीन (पद्म) कलिका देवी सुमित्रा सुतं<br>श्रीमन् माण्डरवंशविश्रुतजनिः सोऽस्याः कविर्मोहनः ।।

इयं चात्र तस्य कवेः सहृदयान् प्रति विज्ञापना-

आस्वादयन्तः प्रणयेन सन्तस्तास्ताः पुराणीरचनाः कवीनाम् ।<br>इयं नवीनेत्यपि कौतुकेन कृतिं मदीयामवलोकयन्तु ।।

Closing :

काले वर्षति (तु) वारिदो वसुमती सस्यैः समापूर्यतां<br>नन्दन्तु क्षपितद्विषः क्षितिभुजो यज्ञैर्यजन्तां द्विजाः ।<br>साधूनां सुखमेधतामनुदिनं नश्यन्तु धर्मद्विषः<br>श्रीमन्मोहनसत्कवेः कृतिरसावाकल्पमुज्जृम्भताम् ।।

वसन्तः—एवमस्तु ।

इति निष्क्रान्ताः सर्वे ।

दमनमञ्जुलो नाम चतुर्थोऽङ्कः ।। समाप्ता चेयं दमनमञ्जरी नाम नाटिका ।।

This नाटिका is not mentioned by Aufrecht. Dr. Raghavan told me that Mohan Kavi, the author of the drama, was connected with the Raja of Bikaner also. He kept his one step at Bikaner and the other at Amber.

दमन is a kind of plant and a festival is observed when it bears मंजरी in the spring season.

### 352. दशरूपावलोकः by धनञ्जय (धनिक)

**Closing :–**

यद्वाष्पवस्तु कविभावकभाव्यमानं
तन्नास्ति यत्र रसभावमुपैति लोके ।
विष्णोः सुतेनापि धनञ्जयेन
विद्वन्मनोरागनिबन्धहेतुः ॥
आविष्कृतं मञ्जुमहीशगोष्ठी
वैदग्ध्यभाजा दशरूपमेतत् ॥
इति विष्णुसूनोर्धनिकस्यकृतौ दशरूपावलोके चतुर्थः परिच्छेदः समाप्तः ॥

### 470. दुर्घटकाव्यम् by गोवर्द्धन भट्ट

श्री गणेशाय नमः

श्लोकः ॥ अन्धारी भयभीति राति कचरो लातां छड़ी डोकरी
कीटां गर उछली बक रही भेड़ा लड़ी डाँगरी ।
लाती भीति गिरीर गंडक भशो बूटो गधो भूकणो
भाजी भेड भभाय मांकड हशो रीछां गह्यो बांदरो ॥१॥

टीका–अन्धेति ॥ अन्धकासुरः नामैकदेशग्रहणेन नाममात्रस्यापि ग्रहणम् । भीमो भीमसेन इतिवत् ॥ व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादेर्लक्षणमिति तस्य अरिः अन्धारिः, ईः श्री ईकारो बाणकमलारचनासु इत्येकाक्षरः तस्याः भयो यस्मात् स ईभयः, तस्मै भीतिं राति ददाति, राल् दाने, स भयभीतिरः, कः ब्रह्मा, कः सूर्यमित्रवाय्वग्निब्रह्मात्मयमकेकिषु इत्येकाक्षरकोषे तं अतिक्रान्तः, अतिकः, अत्यादयः क्रान्ताद्यर्थे द्वितीयतत्पुरुषः, एतादृशः चरः सेवको यस्य स अतिकचरः, यत् सेवकस्यापि ब्रह्मातिशायिनी कर्तृत्व शक्तिःस्यादित्यर्थः । वा अति अत्यर्थंके जले चरति जलशायित्वात् स अतिकचरः, कं नीरसु खमूर्द्धसु इत्येकाक्षर कोषे, वा कचो बृहस्पतिसुतः तं अतिक्रान्ताः अतिकचाः दैत्याः तेषां रः अग्निः दैत्यानाम् प्रलयानल इत्यर्थः, आंछनं आंछः अच्छा यामे आयामो दीर्घीकरणं लातो दत्तः, ला दाने, आंछो विस्तारो यया सा लाताञ्छा सा, वा लातः धृतः विस्तारो वामनावतारे लीलया हेलया एव येन स लातांछलीलः, ली रजः प्राधान्येन प्रतिपालकत्वात् मत्स्यादि दशावताररूपाः यस्य सः लातीछलीलः, डयोः स्थानेलौज्ञेयौ बवयोर्डलयोर्नभित् इति वाग्भटोक्तेः, वा अलातस्य उल्मुकस्य आंछः विस्तारः अर्थादाकर्षणावसरे रेखारूपः स इव चंचला ला संसाररूपा यस्य सः पूर्वदिगवच्छेदेन व्यधिकृतमलातं तद्दगवच्छिन्नं दृश्यते तथैवास्यापि संसाररूपा लीलाऽपरकालेऽपि पूर्वकालावच्छिन्नैवावभासत इत्यर्थः, न कलिः कलहः अक्षियुगोवा यस्य सः अकलिः, इरणं ईरः सोऽस्यास्तीति ईरी सर्वेषां शास्तृत्वात्, वा न कलेः ईरः प्रवर्तनं विषये यस्य स अकलीरी प्रत्युत कलेः निर्मूलक इत्यर्थः, अकं पापं दुःखं वा, अकं पापे दुःखे च इति विश्वः, तस्य लीः लयनं, ली विलयने तस्य ईरः प्रेरणमस्यास्तीति अकलीरा पापदुःखयोर्विलयनकर्तेत्यर्थः, सेवकानामितिशेषः कीटांगं वा राति आदत्ते सः

कीटांगर: कीट इत्युपलक्षणं मत्स्यकूर्माद्यनेकरूप इत्यर्थः, वा कीटा जीवाः कीटशब्दोपलक्षिताः अन्येऽपि जीवाः तेषां यान्यङ्गानि तेषां रः वह्निः मोक्षदानेन, पुनरङ्गानामग्रहणात् उत अधिकं छलं छद्म विद्यते यस्य सः उछली, वामनाद्यवतारेण बलिप्रमुखानामनेकेषां छलनात्, बकिः बकासुरः तस्य रहणं रहः त्यागः रह् त्यागे स विद्यते यस्यः स बकरही, प्राणानपहृत्य त्यक्तवानित्यर्थः भानि-नक्षत्राणि, नक्षत्रमृक्षं भं तारेत्यमरः तेषां ईट् ईशः नक्षत्रेशः चन्द्रः,तद्वत् आसमन्तात् ललनं ललच्छल-हेला सेवा लडनं लडः लड् विलासे स विद्यते यस्य स भेडालली भेड़ालड़ी वा, सेवकानां चन्द्रवद्विला सकत्वात् वा बकरहीभेडारडीट् इत्येकपदे तु इभेट् ऐरावतः तेन आसमन्तात् लड़ो ललो वा विद्यते यस्य स इभेडालली, चन्द्रः स ईट् वामनावतारे ज्येष्ठ भ्रातृत्वादीशो यस्य स इभेडाललीट् बकरही चासौ इभेडाललीट् च बकरडीट् पूर्वस्मिन्नर्थे इलांगेरी इति इष्टपदस्यायमर्थः, इला पृथ्वी तां अङ्गेन वराहवतारे योऽत्र रूपेण वामनावतारे चरणांगेन लातीति लः आदानं स विद्यतेऽङ्गस्य सः इलाङ्ग-ली लाङ्गली एतावदवशिष्टपदस्यायमर्थः, लाङ्गलं विद्यते यस्य स बलदेवावतारे आयुधत्वेन यस्य सः लाङ्गली, चतुर्व्यूहावतारे तु बलदेवस्य शेषावतारत्वेऽज परमेश्वरत्वात् लाङ्गलीति हरेरपि विशेषणं युक्तं, वा रामस्यानुजत्वात् क्वचित् कार्यान्तिरे प्रवृत्तस्यास्य रामस्य प्रश्रयावनतः कृष्णः लाङ्गल-धारणेन लाङ्गली इत्यपि सार्थकं विशेषणं, अपरस्मिन्नर्थेतु आङ्गली इत्येव पदं शिष्टं तस्याप्ययमर्थः, आं गं कुं गं सम्बन्धमुख्यत्वाद्वेदाङ्गसम्बन्धीत्यर्थः, तत् अर्थात् अंगोक्तं यत्किंचिन् तत्सर्वंलीयते विलीयते यस्मिन् सः आङ्गली वेदमूर्तित्वादीश्वरे सर्वं तदङ्गसम्बन्धि तत्र लीलनं इति युक्तमेवोक्तं पश्चात्पदयोः कर्मधारेणैवं पदं विधेयं, लानं लातिः दानमिति यावत् तेन कृत्वा ईः श्रीः. ईकारो बाण-रचनाकमलासु इत्येकाक्षर कोषे तस्या सकाशात् या भीतिः, मानवती मा भूदित्याशङ्कात्मिका तस्याः गिलः अदनं नाशनमिति यावत्, गिल् अदने सोऽस्यास्तीति लातिगिली प्रिया सर्वमनोरथैः परिपूर्णा या अवि ईश्वरदत्तोन परितोषस्तु स्वस्याः सन्माननेनैव न तु किमप्यस्या नास्तीति तत्प्राप्यातुष्टेति वा अक्षरच्युतकारेण अकार आनेयः तथा सति अराति-भीति-गिलीति पदं जातं अस्यार्थस्तु अरातिः शत्रुः यः इभी इभवान् कुवलापीड़नामा तस्य इतिः गतिः, इ गतौ, प्राप्तिरिति यावत्, गत्यर्थाश्च ते प्राप्त्यर्थाः इत्युक्तत्वात्, तस्यां गिलति गिलन्त्वत्र अपुनर्भवनं वाच्यं इति, गिलः तस्य मारणेनापुनर्भवनात् सोऽस्यास्तीति गिली साक्षात् श्रीकृष्णकरतः पुनर्नाभवनं प्रापेत्यर्थः, इरणं इरः प्रेरणं तस्य गण्डकाः अन्तरायाः, गण्डको मलने घूलौ कलौ निस्नेह पात्रयोः । अवच्छेदेन्तरायेति विश्वः, तेषां भः भावः, भकारः पुंसिजलदेत्यमरे, भावशूलनो इत्येकाक्षरकोषे तं श्ययति सः इरगण्डकभशःस्वाश्रोल्लङ्घकानां अभावकृत् नाशक इत्यर्थः, आपः पानीयं, आपः स्त्री भूम्निवारीत्यमरः ताः उछाः सूनुत्वेन येन सः आपो नारा इति प्रोक्ता आपो वै नरसूनव इत्यादि श्रुतेः, अबूढः अगमद्रि गोवर्द्धनाचलाख्यं दधाति कृष्णावतारे सः अगधः स्वाश्रितानां इन्द्रप्रेरितमेघवृष्टेरुद्वेगादि-निराकरणार्थं अगधारणादिसाहसकर्तृत्वेनेश्वरस्य भक्तेषु परमकारुणिकत्वमुक्तं, भूर्भूमिरचला-नंतेत्यमरः, तत्र कणाः सप्तधान्याद्याः यस्य सः भूकणः यत्सप्तान्नानि मेधया तपसाऽजनयत् पितेति उपनिषदि, वा भूः पृथिवी सा कणः अति सूक्ष्मरूपो यस्मिन् विराट रूपे सः भूकणः, कणोऽति सूक्ष्मे

धान्या सेट् इति विश्वः, इत्यनेन परमैश्वर्यमुक्तं, मा पृथ्वी, भा दीप्तौस्याद्धरायामलंकृतौ इति माधवैकाक्षर कोशे, तस्या अजयः संग्रामः अनेकदैत्यैः साकं यस्य सः भाजिः इभेट् इभाः गजाः तेषां ईट् स्वामी रामचन्द्रावतारेषु राजचिह्नमेतेन उक्तं, अः कमठः तस्यभा शारीरी शोभा सा अभा तत्स्वरूपेण भातीति अभभाः, कमठशरीरभात्वेन भासमानत्वोक्ते सेवक रक्षणार्थं दशावतार-धारित्वं सूचितं, अयः भाग्यं, अयः शुभावहो विधिरित्यमरः, तत् विद्यते यस्य स अयी, भाजि चासौ इभेट चासौ अभभः चासौ अयी च तत् सम्बोधने भाजिभेङ भभायिन् नकारस्तु अनुक्तोप्यक्षरच्युत तर्कालङ्कारेण आनेयः वा यकारस्थाने इकार एवास्तु तथा च भाजीभेड़भाः इत्येकं पदं इ इति सम्बोधनार्थद्योतकं विस्मयार्थद्योतकं वा अव्ययात्मकं परपदं इत्येव समाधानं, कलहः प्राक्तनकृतः शरीरदुःखप्रदः तं श्यति तनूकरोति शो तनूकरणे, स कलहशः, अखण्ड सच्चिदानन्द-परमब्रह्मस्मरणमात्रेणैव सकलदुःखापनोदात् अरिः शत्रुः कश्चिन्मुमुक्षुर्दैत्यः तस्य या इच्छा ईश्वरं प्रति प्रतिकूलरूपा तां अथ च तस्यैव यान्यङ्गाश्रयणे तेषां गहः घोरः भीम भयानक इति यावत्, गहत्क गहने इतिकविकल्पद्रुमे, क्विबन्तस्यास्य गह् इति हलन्तं रूपं तं याति प्रतिस्पर्द्धित्वेन नाशयितुं प्राप्नोति या प्रापणा प्रापणयो इति धातोः, स अरीछांगह्यः अंदर इति विन्दुच्युतका-लंकारेण अदर इति विष्णोर्विशेषणम्, न दरं भयो यस्य सः अदरः दरस्यापि स्वकीयत्वादिति भावः, वा अन्दः वन्दनं (बन्धनं) अदि बन्धे इति धातोः, सेवकानां संसारपाशबन्धनरूपं तं लाति आदत्ते, लाल च ग्रहे इति धातोः, नाशयतीति भावार्थः, स अन्दलः ला धातुर्वा रा धातुश्चेद् ग्रहणार्थे उच्येतां तदा अज्ञानां श्रीविरागविमुखानां अन्दं संसाररूपं ददाति स्वमायया स अन्दरः अन्त ओकारस्थाने विसर्गस्यापि पठने कोऽपि भाषायां उत्कटो भङ्गः तथैव पठनीयं वा अन्ते तु सतो विसर्गस्य ऊकारत्वात् पादकसूत्राभावादनन्यगतिकत्वेनाक्षेपादोकारस्थाने आक्षिप्तो विसर्ग एव स्यान्नात्रकोपि युक्तिभङ्गः एवं अनेकापरंपारविशेषणविशिष्ट परं कारुणिकेश त्वं मां अव इति श्लोक प्रयासकर्तुः कवेराशंसा इत्येकोऽर्थः ।

भट्ट गोवर्द्धनकृतो भाषासंस्कृतार्थे गूढविनोदहास्यार्थं श्लोकस्तु ।

### 7380, धातुमञ्जरीविवरणम् by म. कु. रामसिंह

Opening:

शब्दब्रह्मात्मकं रामनामैवार्थप्रकाशकम् ।
प्रकृतिप्रत्ययाभ्यासात् साधितं द्योतते रामः ।।१।।

अथ परस्मैपदप्रक्रिया ।। अ क-अ ग कुटिलायां गतौ ।

Colophon:

इति श्रीमन्महाराजाधिराजजयसिंहदेवकुमारेण श्रीरामसिंहवर्मणा विरचिते धातुमञ्जरी-विवरणे परस्मैपदप्रकरणं समाप्तम् ।।शुभं भूयात् ।।

171,548. **नलचम्पूः (दमयन्तीकथा)** by **त्रिविक्रमभट्ट** with ct. by **चण्डपाल** and **विवरण** by **गुणविनय गणि** p/o **जयसोम**

Opening:

ध्यात्वा सरस्वतीं देवीं विबुधानन्ददायिनीम् ।
सुवर्णां पुण्यरूपां तां अलङ्कारविराजिताम् ।।१।।

× × ×

श्रीचण्डपालोऽत्र कियत्पदानां यद्यप्यनिन्द्यां विवृतिं चकार ।
तथापि तच्छेषपदार्थसार्थप्रकाशनात्तां विवृणोमि चम्पूम् ।।५।।

Closing:

अकबरनृपतौ विजयिनि शरभुवनसम्मिते वर्षे ।
श्रीमल्लाभपुरीयं प्राकाशि परां पुरस्सुधियाम् ।।६।।

Colophon:

इति वाचनाचार्यश्रीमच्छ्रीप्रमोदमाणिक्यगणिशिष्यश्रीजयसोमगणिस्तच्छिष्य-पं०गुणविनयगणिविरचितायां श्रीत्रिविक्रिमभट्टविरचितश्रीदमयन्तीकथाविवृतौ सप्तम उक्छ्वासः समाप्तः ।। ग्रं० सं० १०००० चम्पूवृत्तिः समाप्ता । सरस्वतीतिनाम्नी वृत्तिरियं संवत् १७२५ वर्षे आषाढकृष्णाष्टम्यां शनौ लिखिता ।।

Post-Colophonic:

श्रीविक्रमवंशोद्भवसद्विक्रमराजसिंहनृपराज्ये
सत्कर्मकर्मचन्द्राभिधं सखधुरीणं सन्धार्य ।।(?)
श्रीमद्विक्रमभूपतः स्वरसरस्वत्यर्कशक्रप्रमा-
ख्यातायां शरदि प्रमोदविसरभ्राजिष्णुपौराकुले
श्रीसेरुत्रकनाम्नि भद्रनगरे हर्म्यैश्च शोभाधरे
चक्रे श्रीदमयन्त्युदारचरिते टीकां महार्थां सुधीः ।।१६।।

12. **नागरसर्वस्वम्** by **पण्डित पद्मश्री**

Opening:

सक्तत्तमपि यं स्मरन्नभिमतां मनोहारिणीम्
लभेत मदविह्वलां झटिति कामिनीं कामुकः ।
तमुल्लसितडम्बरं सुरुचिराङ्गरागारुणं
नमामि सुमनःसरं सततमार्यमञ्जुश्रियम् ।।१।।
केचिद्भाषान्तरकृततया कामशास्त्रप्रबन्धाः
दुर्विज्ञेया गुरुतरतया केचिदल्पार्थकाश्च ।
तत्पद्मश्रीविरचितमिदं सर्वसारं सुबोधं

शास्त्रं शीघ्रं शृणुत सुधियोऽभीष्टधर्मार्थकामाः ।।२।।
नानाविचित्रैः सुरतोपचारैः क्रीडासुखं जन्मफलं नराणाम् ।
किं सौरभेयीशतमध्यवर्ती वृषोऽपि सम्भोगसुखं न भुङ्क्ते ।।३।।

Closing:

आसीद् ब्रह्मकुले कलाग्रनिलये यो वासुदेवः कृती
तस्य स्नेहवशाच्चिरं प्रति मुहुः सम्प्रेरणात् साम्प्रतम् ।
दीप्तेयं रतिशास्त्रदीपकलिका पद्मश्रियो धीमतो-
हृद्यार्थं प्रकटीकरोतु जगतां संहृत्य हार्दं तमः ।।१६।।
राजा धर्मरतोऽस्तु निर्जितरिपुः षाड्गुण्ययोगान्वितो
निःक्लेशाः कृतिनो भवन्तु मुदिताः सत्कारलाभान्विताः ।
अन्योन्यप्रियताप्रसन्नमनसः सर्वत्र सन्तु प्रजाः
नित्यं तिष्ठतु सर्वसत्यनिचयैः सम्पूजिता मेदिनी ।।१७।।

Colophon:

इति पण्डितपद्मश्रीविरचिते नागरसर्वस्वे सु(र)तोदयो नामाष्टाविंशतिपरिच्छेदः ।। समाप्तश्चायं ग्रन्थः ।

### 346. **नाटकचन्द्रिका** by **रूप गोस्वामी**

Opening:

श्रीकृष्णाय नमः ।।
वीक्ष्य भरतमुनिशास्त्रं रसपूर्णसुधाकरञ्च रमणीयं
लक्षणमतिसंक्षेपाद्विलिख्यते नाटकस्येदम् ।।१।।
नातीवसंगतत्वाद्भरतमुनेर्विरोधाच्च ।
साहित्यदर्पणीया न गृहीता प्रक्रिया प्रायः ।।२।।
दिव्येनादिव्यदिव्येन तथा दिव्येन वा युतम्
धीरेणाढ्यमुदात्तेन कृष्णश्चेल्ललितेन च ।।३।।

Colophon:

इति नाटकचन्द्रिका समाप्ता ।। सं० १८५७ वर्षे माघ वदि १० भौमवासरे लिखितमिदं पुस्तकम् ।।

### 276. **नाममालासङ्ग्रहः**

The author's name and date of scripts are not given. Fom the following verse, in the opening, and the paper it appears that it was composed for the study of M.K. Ram Singh.

रामव्यवहाराय वालानां रचिते नामसङ्ग्रहे ।
नाम्नां नातिप्रसिद्धानां लिख्यते वृद्धसम्मतिः ।।

6122. निगमार्थदीपनम् by [पद्म पण्डित] p/o प्राणनाथ

Opening:

मायोल्लासाक्षरा ये हरिहरविधयो यश्च मायाश्रयोऽन्यत्
तेषामीशो महात्माक्षर इति कथितोऽसंख्यविश्वाद्यवन्द्यः ।
तस्यापीशश्चिदात्मा विहरति परया लीलया यस्सखीभि-
र्धाम्नि श्वेतं किशोरं निरुप(म)रमणं चाक्षरातीतमीडे ।।१।।
प्रौढाज्ञानविनाशनैकचतुरां सत्प्रेमलक्षाञ्चितां
धामोद्दामविवेचनैकजननीं सत्तारतम्यान्वितम् ।
योऽदाच्छ्रीयुतछत्रशालधरणीपालाय विद्यां परां
वन्दे तं मुनिवृन्दवन्दितपदं श्रीप्राणनाथाभिधम् ।।२।।
कलौ प्रादुर्भूतो य इह करुणाकल्पिततनुः
स्ववाणीभिर्मायाऽऽवरणविनिपाताय जगताम् ।
परः शुद्धो बुद्धो निगमगदितो धामनिलयो
हरीशाद्यैर्वन्द्यो जयति स महान् प्राणरमणः ।।३।।
तारतम्यमवगत्य पुण्यतः प्राणनाथपरमानुकम्पया ।
सन्तनोमि निगमार्थदीपनं त्तत्त्वतः परमहंसतुष्टये ।।४।।
अवोधादन्यथा नीतः श्रुत्यर्थो बहुधा बुधैः ।
प्राणनाथोपदेशेन स यथार्थो निरूप्यते ।।५।।
The ms. bears another title as प्राणनाथावतारः ।। ff. 64

367 नैषधीयचरितटीका by जिनविजय p/o देवविजय

Opening:

स्वस्ति श्रियं वितनुतात् श्रीनाभेयजिनाधिपः ।
विघ्नान्धकारमार्तण्डः श्रेयस्तरुबलाहकः ।।१।।
सरस्वतीं नमस्कृत्य सर्वबुद्धिप्रदायिनीम् ।
तरणीं पततां घोरे जनानां जाड्यवारिधौ ।।६।।
करोमि स्वगुरोः पादप्रसादात्तप्रौढतो मुदा ।
श्रीमन्नैषधकाव्यस्य वृत्तिं बालावबोधिनीम् ।।७।।
The Ist canto ends :—
श्रीवीरस्य यथाक्रमेण गुरवः पट्टे बभूवुर्विभोः
श्रीसूरीश्वरहीरहीरविजयाः श्रीमत्तपागच्छपाः ।
तेषा श्रीजयवन्तसंज्ञऋषयः शिष्या मनीष्युत्तमाः
तेषांमन्तिषदश्च देवविजयाः संविज्ञविज्ञोत्तमाः ।।

तत्पादाम्बुजचञ्चरीकसदृशश्चारित्र्यचूडामणेः
प्राप्यार्थं विनयादिसद्विजयतः तद्वाचकाधीश्वरात् ।
सर्गोऽत्र प्रथमेऽतनिष्ट विबुधः श्रीनैषधस्यादरा-
दर्थात्कल्पलतां जिनादिविजयष्टीकामिति श्रेयसे ।।

At the end of 21st canto :—

विश्वार्यहीरविजयाह्वयसूरिशिष्याः
मेधाविनोऽत्र ऋषयो जयवन्तसंज्ञाः ।
तेषाञ्च देवविजया विबुधास्तदीयः
शिष्यो जिनादिविजयो विबुधो विशिष्यः ।।
श्रीवाचकाद् विनयसद्विजयादधीत्य
श्रीनैषधीयमथ तस्य चकार टीकाम् ।।
तस्यां समर्थसुगमार्थसमर्थितायां
सर्गः समाप्तिमगमत् अयमेकविंशः ।।

Aufrecht mentions one ct. on नैषधीयचरित by जिनराज । जिनविजय is different form जिनराज p/o जिनसिंह सूरि p/o जिनचन्द्रसूरि of खरतरगच्छ ।

### 6719. न्यायकुसुमाञ्जलिविकासः by गोपीनाथ मौनी

Closing :

आसीन्महाराष्ट्रकुले यशस्वी श्रीमौनभट्टः कुलकल्पवृक्षः
यन्नामवर्णाङ्कितनामधेया भवन्ति पूज्याः पृथ्वीपतीनाम् ।।१।।
तदात्मजोऽभूद् रघुनाथनामा नामापि पापप्रशमाय यस्य
स्वजन्मना येन कृतं पवित्रं कुलं रघूणामिव राघवेण ।।२।।
यस्यानुजः सर्वपथःप्रवीणो दामोदरो वागुदधिं विगाह्य
मल्लारिनामापरलब्धशक्ति सरस्वतीमेव सुतं प्रपेदे ।।३।।
गोस्वामिनामा रघुनाथसूनुर्भूमण्डले वागधिपो परोऽभूद्
यदङ्घ्रिपद्मस्मरणावलोकाल्लोकाः सुराणामपि नातिदूरे ।।४।।
तदात्मजोऽनल्पमतिप्रकाशमाचार्यवाचामकरोद्विकासम्
दुरूहतर्कानवधानभीतास्तदस्तु तुष्ट्यै भवतां नवीनः ।।५।।
न्यायप्रसूनाञ्जलिनामधेयं निर्माणमाचार्यकृतं प्रकाश्य
प्रचारमेतस्य सुधीषु याचे न चेत् खलस्तुष्यति किं ततो मे ।।६।।
प्रगृह्य निर्माणमिदं महाद्यैः प्रकाशितं किं न कृतं ममैतैः
गुणान् गृणद्भिर्विमलैर्महद्भिः सदर्पणैः कैश्चिदिव प्रभूतैः ।।७।।

महाशयानां हृदयं प्रविष्टा मुखाकृतिर्दर्प्पणसंगतेव
महत्त्वमादाय निजाश्रयस्य प्रसिद्धिमायास्यति निर्मितिर्मे ।।८।।
उक्तेन किं वाणु मनोमहर्घैः प्रकाशितं मय्यति गौरवेण
निजेन यत्नेन त एव सन्तः प्रचारयिष्यन्ति कृतिं मदीयाम् ।।९।।
राज्ञः श्रीजयसिंहस्य गिरावाम्बेरिसंज्ञके
आचार्यकारिकाव्याख्यां गोपीनाथोऽकरोदिमाम् ।।१०।।

Colophon :—

इति गोपीनाथमौनिनः कृतौ कुसुमाञ्जलिविकासे पञ्चमः स्तबकः सम्पूर्णः ।।
The author seems to be a contemporary of Mirza Raja Jai Singh.

### 6746 **यायमुक्तावलीटीका** by **महादेव भट्ट** s/o **बालकृष्ण**

Opening: —

लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाभिधं
भारद्वाजकुलाम्बुधौ विधुमिव श्रीगौरवस्याम्बुजात् ।
ज्ञात्वाऽशेषमतं मितेन वचसा सिद्धान्तमुक्तावली–
गूढार्थं तनुते यथामति महादेवः परेषां कृते ।।१।।

Closing:—

भानुं प्रणम्य परिभाव्य च शास्त्रसारं मुक्तावलीकिरण एष पितृप्रदिष्टः ।
सद्युक्तिभिर्दिनकरेण करेण सोऽयम् नातः प्रकाशपरमं सुधियां मुदेऽस्तु ।।२।।
बालकृष्ण had started the work but it was completed by महादेव, his son.

### 5616. **न्यायामृततरङ्गिणी** by **रामाचार्य**

Opening: —

श्रियः सदानन्दगुणैंभृतं भुजे भुजेऽथ दोषं तदशेषशक्तिभिः ।
विशेषवाणीमितमात्मनो मुदामुदारमीशं प्रियवल्लवं नुमः ।।१।।
साधुप्रसादितगुणोपनिषत्सखीभिः, सूत्रग्रहानुसृतकञ्चुकिवाचिदक्षम् ।
वंशाग्रगापि जयवाक्त्रिषु नर्तकीव, चित्तं जहार तमपारकृपं नमामि ।।२।।

Closing :—

सद्योजातज्ञराजपावनसरिद्गोदावरीतीरतो
गव्यूतिर्वसतिः सतां कुलवतामम्बापुरी तत्र ये ।
व्यासाख्या उपमन्युगोत्रजनुषास्तेषांतु ये मुद्गला-
स्तत्राजज्ञनये मुरारिचरणव्यासाभिधाना बुधाः ।।२।।

तेभ्योऽजायत विश्वनाथ इति यो......................
स्तस्मादाविरभूत् सुरद्रुमयशा ग्राचार्य नारायणः ।
रामाचार्य इतीरितस्तदनुजो यस्तत्त्ववादी बुधो
एतानीत्स तरंगिणीमिह परिच्छेदश्चतुर्थोऽपि यः ।। ।।३।।

### 7241. पंचाशद्वर्णविवरणम् by यदुनन्दन भट्ट

Opening :

तारं तारकमन्युशान्तिसुधियः केचिन्निरालम्बनं
यत्तत्त्वं स्वपदं निरञ्जनपदं सत्यं पदं ब्रह्मणः ।
तद्विष्णोः परमं पदं शिवपदं निर्वाणशक्तेः पदं
तत् सत्तत्वमसीति पातु भुवनं रामाभिधोऽयं महः ।।१।।
ब्रह्मागस्त्यवसिष्ठगोतमशिवाफेत्कारिणीतन्त्रजान्
कोशात् यामलरुद्र(विष्णु)कथितान्निर्घण्टवर्णावलीम् ।
प्रीत्यालोच्य च विष्णुरुद्रकथिते वर्णाभिधाने मुहु-
र्भट्टः श्रीयदुनन्दनो वितुनुते वर्णाभिधानं परम् ।।२।।

### 502. पद्यतरङ्गिणी by व्रजनाथ भट्ट

Opening :

नवनीलनीरदसमानरोचिषे कुसुमायुधातिकमनीयशोचिषे ।
तडिदम्बराय महसे फलायते निगमान्तवेद्यवपुषे नमो नमः ।।१।।
सर्वान् प्रबन्धानालोच्य विदुषां तोहेतवे ।
कृतेयं व्रजनाथेन रम्या पद्यतरङ्गिणी ।।२।।

The work is divided into तरङ्गःs

| | | | |
|---|---|---|---|
| प्रथमतरङ्ग | — सज्जनप्रशंसा | 59 | couplets |
| द्वितीयतरङ्ग | — गुणप्रशंसा | 36 | ,, |
| तृतीयतरङ्ग | — विद्वत्प्रशंसा | 42 | ,, |
| चतुर्थतरङ्ग | — लक्ष्मीप्रशंसा | 18 | ,, |
| पंचमतरङ्ग | — दातृप्रशंसा | 18 | ,, |
| षष्ठतरङ्ग | — सन्मित्रप्रशंसा | 15 | ,, |
| सप्तमतरङ्ग | — दैवाख्यानम् | 9 | ,, |
| ग्रष्टमतरङ्ग | — उद्यमप्रशंसा | 17 | ,, |
| नवमतरङ्ग | — मूर्खकृपणदुर्जनदरिद्रयाचकनिन्दा | 84 | couplets |
| दशमतरङ्ग | — राजनीतिः | 56 | couplets |
| एकादशतरङ्ग | — साधारणनीतिः | 125 | ,, |

### 15,510. पद्यामृततरङ्गिणी by हरि भास्कर

Opening :

पद्मिनीमूर्तिमत्प्रेम हेमशैलावहेलनं
इन्द्रादिसुरसौभाग्यं धाम तत्कामयामहे ।।१।।

Closing :

अम्बिकेश्वरपुरीकृतवासादग्निहोत्रीकुलनीरधिचन्द्रात्
पुण्यपूर्णपुरुषोत्तमदाराद् बभूव सुकृती हरिभट्टः ।।१।।
वेदवाक्यनिचयावचयेन प्रेक्षितो विधिरिवेह बुधौघै :
लोकगीतविमलायतर्कीर्तिः सोऽपि सज्जनमरिगर्जयति स्म ।।२।।
तस्मादुद्भूतकीर्तेः कृतसुकृतभरात् मंत्रतंत्रस्वतन्त्रः:
साधूनामग्रगण्यो गददलनविधौ मानवानां शरण्यः ।
काशीक्षेत्राधिवासी हृत्कठिनजरारातिषड्वर्गदम्भः
श्रीमानपाजिभट्टः सुरयजनरतः शुद्धधीराविरासीत् ।।३।।
तत्सुतो भास्करः काश्यां हरिरित्यपराभिधः ।
अचीकरत् सतां तुष्ट्यै पद्यामृततरङ्गिणीम् ।।४।।
आषाढमासे सुवलक्षपक्षे खवह्निसप्तेन्दुमिते शुभेऽब्दे । (१७३०)
गुरौ नवम्यामगमत्समाप्तिं सत्पद्यपीयूषतरङ्गिणीयम् ।।५।।

### 524. पद्यावलीसारसंग्रहः by सवाई माधवसिंह (प्रथम)

Maharaja Sawai Madho Singh I compiled some selected Sanskrit couplets and rendered their Hindi traslation in verses. He calls his work as माधनन्दिनी ।

Opening :

नमो नलिननेत्राय वेणुवाद्यविनोदिने ।
राधाधरसुधापानशालिने वनमालिने ।। (सारङ्गस्य)
कँवलनैन नित बंदिये, बैन मैन उलहन्त ।
राधा-अधर-सुधा-रसिक, उर वनमाल लसन्त ।। (माधवस्य)
ये गोवर्द्धनमूलकर्दमरसव्यादिष्टबर्हङ्गदा
ये वृन्दावनकुक्षिषु व्रजवधूलीलोपधानानि च ।
ये चाभ्यङ्गसुगन्धयः कुवलयापीडस्य दानाम्भसा
ते वो मङ्गलमादिशन्तु सततं कंसद्विषो बाहवः ।। (कस्यचित्)

जे हैं गोवर्धनगिरितर की स्रवत कीच-
बुन्दनि वलित बर्हं बजुवांनि वाह वाह ।
जे हैं अलि-पुंज-मंजु-वृन्दावनकुंजन में
विहरत गोपिनि उसीरन की हरेंचाह ।
जे हैं कुवलयपीड करी के गलित मद-
तोयन कैं लाग सुरभित यों किये सराह ।
ते वे कोरि मंगल उमंगन कौं देहु सदा
साहिब हमारे कंस-बैरी के बिलंद बाह ।। (माधवनन्दिनी)

सुदामानं प्रति द्वारकेश्वरवचनम्—
मा गा इत्यपमङ्गलं व्रज सखे स्नेहेन शून्यं वचः
तिष्ठेति प्रभुता यथाभिलषितं कुर्वित्युदासीनता ।
ब्रूमो हन्त सुदाम मित्र वचनं नैवोपचारादिदं
स्मर्तव्या वयमादरेण भवता यावद्भवद्दर्शनम् ।।१८४।। (कस्यचित्)
काहे कौं पधारैं यामें मंगल है कौन अरु
जैयै बालसखा यह वचन सनेहहीन ।
कहियै बिराजन तौ प्रभुता जनाई जात
कीजै मनमान्यौं यह आखैं होउ उदासीन ।
देखि तुम्हैं प्रफुलित बिनवौं सुदाम मित्र
नांहि न जताऔं उपचार के भयो अधीन ।
कीयैं रहौ यादि हमें हीये भरि आदरसौं
दीयैं रहौ जो लों तुम दरशन रंगभीन ।। १८४।। (माधवस्य)

Closing:
सुर दृग वसु ससिसौं लस्यौ, संवत कार्तिक सेत । (१८२२)
पूरण तिथि रविवार सो, भयो ग्रंथ छवि देत ।।१।।
बांचि लीजियो सोधिकै, सुघर अरथ उच नीच ।
राधा हरि लीला भरी, द्वै दोहन कै बीच ।।२।।
सर्वतो भद्रमालोक्य सर्वतोभद्रमन्दिरे ।
माधवो माधवध्यानान्माधवानन्दिनीं जगौ ।।३।।

Here सर्वतोभद्र मन्दिर means the Hall of audiance in the City Palace, Jaipur.

Coloplon:
इति श्रीमन्महाराजाधिराजराजराजेन्द्र-श्रीसवाईमाधवसिंहदेवविरचितपद्यावलीसार-संग्रहः समाप्तिमगमत् ।।

संवत् १८२२ वर्षे आश्विनमासे शुभकृष्णपक्षके तिथौ अष्टम्यां शनिवासरान्वितायां लिपिकृतं घासीरामेण । शुभमस्तु ।।

7335. **परिभाषाविवरणम्** by........s/o **कल्लदेव**

Closing:

हाटकेषु पुरःस्थायी कल्लदेवसुतोऽकरोत् ।
परिभाषानिदेशानां विवरणं मुदे सताम् ॥

119. **पाण्डित्यदर्पणम् (प्रज्ञामुकुरमण्डने)** by **उदयचंद्र श्वेताम्बर**

Opening:

यस्य ज्ञानदयासिन्धोः प्रसक्तेः पशुपूरुषाः ।
भवन्ति विबुधा भूमौ तं वन्दे परमं गुरुम् ॥
भगवति गुरुदेवे नमस्कृते सर्वे देवाः नमस्कृताः स्युः
यदुक्तं श्रीभागवते—
आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुद्ध्या सेवेत सर्वदेवमयो हि सः ॥

Closing:

वेदाग्निमुनिभूसंख्ये वत्सरे श्रावणे सुदि । (१७३४)
जातं नाम्नापि मांगल्यं प्रज्ञामुकुरमण्डनम् ॥१॥

अथ प्रज्ञामुकुरमण्डनार्थं विद्वन्मण्डलमौलिमण्डनमणिस्तद्वृत्तान्तज्ञो दोषज्ञः प्रभुः प्रस्तूये इति पूर्वोदितस्य चरितार्थीकरणार्थमदः पद्यम्—
शुभाय स्तात्सतां शश्वत् प्रज्ञामुकुरमण्डनम् ।
भूषितं शास्त्रदृष्ट्या यत् तैलंगकुलभूषणैः ॥२॥

स्वमण्डनत्वात् प्रज्ञामुकुरमण्डनेन समण्डनो भवत्वयं पाण्डित्यदर्पणः ॥

Colophon :

इति श्रीसूर्यवंशावतंस-सदसत्पयोविवेचनराजहंसमहाराजश्रीमदनूपसिंहदेवेनाज्ञप्तेन श्वेताम्बरोदयचन्द्रेण संदर्शिते पण्डित्यदर्पणे प्रज्ञामुकुरमण्डनादर्शो नाम नवमः प्रकाशः (समाप्तः) ॥ शिवमस्तु सर्वजगतः ॥

यः माङ्गल्यशब्दनिर्णयः । अर्याणीशब्दनिर्णयः । दर्पणदर्शनगुणाः । पाण्डित्यदर्पणमार्जनार्थं विज्ञप्तिपद्यं । नवाबश्रीदिलेरखांनस्तुतिपद्यपञ्चक । तदमात्यबालचन्द्रसभायां पाण्डित्यदर्पणपरीक्षोपाख्यानं । दिवाकरादिपण्डितस्तुतिपद्यसप्तकं नवमे प्रकाशे मुकुरखण्डननामोद्दिश्य लिखनं ॥ द्विजराजश्रीबालकृष्णवर्णनं ॥ नैषधपद्यलिखनं ॥ मुकुरमण्डनमुद्दिश्याशीः पद्यम् ॥

Aufrecht mentions Anūpasimha as Anūpachandra.

### 334. पारसीप्रकाशः by बिहारी कृष्णदास ।

Opening : ।। श्री गणेशाय नमः ।।

श्री सूर्य उक्त आफ्ताबस्तस्मिल्लावोऽपि कथ्यते ।
नैय्यरे आय्यलमश्चापि तवको भुवनेषु च ।।१।।
आलाई स्याच्च नूरानी देवतायामथासुरे ।
इब्लीसो देव शैतानो खुदायः परमेश्वरे ।।२।।
पातृशाही च विभूतौ स्यात् साहिबी सा निगद्यते ।
आबहयातस्तु पीयूषे तूवा कल्पतरौ भवेत् ।।३।।
अब् सरस्सु परिज्ञेया विमाने अर्श ईरितः ।
आतसस्तु भवेद्वह्नौ सोजह तस्य शिखासु च ।।४।।
दशायां तु फतीलह् स्यात् चिराको दीप उच्यते ।
दीपालये तु ताकः स्यात् धूमे दूद इति स्मृतः ।।५।।

Closing :

पारसीकभाषायां यथादर्शनं प्रत्ययागमादेशवर्णविकारनाशविपर्ययविभाषाविधयः सन्धि-शब्दाव्ययकारकसमासतद्धिताख्यातकृत्सु यथाकामं कल्पनीयाः ।।

Colophon :

इति श्रीमहीमहेन्द्र श्रीमदकबरसहिकारिते बिहारिकृष्णदासमिश्रकृतौ कृत्प्रकरण समाप्तम् ।।
पारसीकप्रकाशोऽयं कृष्णदासेन निर्मितः ।
कारितेऽर्कवरेणायं जयति क्षितिमण्डले ।।
संवत् १७०५ कुवारकृष्णद्वितीयायां पुस्तकमलेखि भिखारीत्रिपाठिना ।।

### 385. पिङ्गलशास्त्रम् by नागराज

Colophon :

संवत् १५३५ वर्षे दुतिज सावन बदि १३ बुधौ । लेखका ठा० श्रीधनू सुपुत्र ठा० दमू पड़े (पांडे?)............मांडौगढदुर्गे सुलतांण गयसदीण राज्य प्रवृतर्त । तत्परिगणे चिदौरीदेसे गुमाष्टा दौलतिखा प्रवर्तते.....................'

गुमाष्टा, a representative

### 213. पिङ्गलार्थप्रदीपः by लक्ष्मीनाथ s/o रायभट्ट

Opening :—

गोपीपीनपयोधरद्वयमिलच्चेलाञ्चलाकर्षण-
केलिव्याकृतचारुचञ्चलकराम्भोजव्रजत्कानने ।
द्राक्षामञ्जुलमाधुरीपरिणमद्वाग्विभ्रमं तन्मना-
गद्वैतं समुपास्महे यदुकुलालम्बं विचित्रं महः ।।१।।

भट्टः श्रीरामचन्द्रः कविविबुधकुले लब्धदेहः श्रुतो यः
श्रीमन्नारायणाख्यः कविमुकुटमणिस्तत्तनूजोऽजनिष्ट ।
तत्पुत्रो रायभट्टः सकलकविकुलख्यातकीर्तिस्तदीयो
लक्ष्मीनाथस्तनूजो रचयति रुचिरं पिङ्गलार्थप्रदीपम् ॥५॥
श्रीरायभट्टतनयो लक्ष्मीनाथः समुल्लसत्प्रतिभः ।
छन्दसि पिङ्गलभणिते तनुते टीकामुदारमतिः ॥६॥

ग्रन्थारम्भे ग्रन्थकृदभिमतसिद्धये छन्दःशास्त्राधिष्ठातृपिङ्गलनागानुस्मरणलक्षणं मङ्गलमाचरति—

जो विविह मत्तासाअरपारं पत्तो वि विमलमइ हेलं
पढमब्भास तरण्डो णाअ सो पिंगलो जअइ ॥१॥
(यो विविधमात्रासागरपारं प्राप्तोऽपि विमलमतिहेलं
प्रथमभाषातरण्डो नागः सः पिङ्गलो जयति ॥१॥)

The date of composition of this ct., as given by Aufrecht, is 1600 A.D.

523. **पुष्पवाटिका** by **रामधन**

It is a Sanskrit translation of गुलिस्ताँ in Persian of Sheikh Sādi S'irāzi.

Opening :

ऐश्वर्याद्यवधिं रसैकजलधिं विज्ञानिनां शेवधिं
भक्तानामभयङ्करं यदुवरं भूभृद्धरं सुन्दरम् ।
लक्ष्म्यावासमुरोनिवासमघसत्रासं सुहासाननं
श्रीकृष्णं सुनिवृत्ततृष्णमखिलाविष्टं वरिष्ठं भजे ॥१॥
निखिलनिगमज्ञेयं वादिवादैरमेयं, श्रुतिनिगदितनानासाधनौघैरुपेयम् ।
हृदि विलसदखण्डाकारधीवृत्तिमेयं, व्रजयुवतिनिपेयं भक्तिजेयं नतोऽस्मि ॥२॥
ब्रह्मणोऽपि प्रतिष्ठात्मा श्रीकृष्णः परमेश्वरः ।
राधया सहितः शक्त्या मच्चित्तं परिचुम्बतु ॥३॥
नमस्तस्मै परेशाय माहात्म्येषु सुदुर्गमे ।
विद्वांसोऽपि विमुह्यन्ति हिन्दुका यवनाः समे ॥४॥
गुलिस्तांवाक्यपुष्पाणि पारस्यध्ययनं विना ।
चिन्वन्त्विति करोम्येतां तदर्थां पुष्पवाटिकाम् ॥५॥

नीचादप्युत्तमां विद्यामितिशास्त्रप्रमाणतः ।
ममैष यत्नः सफलो विद्वांस्तमनुमोदताम् ।।६।।
जयति सादिकवेर्वचनामृतं सुजनभाग्यवशाद्भुवि विस्तृतम् ।
वहति कर्णपुटैः प्रपिबन्ति ये जगति खेदभरान् सुतरन्ति ते ।।७।।
नास्ति गुलिस्ताँसदृशं पारस्यां सुप्रवेशकम् किमपि ।
यस्यां प्रवेशमात्राद्बुधाऽपि विज्ञतां यान्ति ।।८।।
न शेखसादिसदृशो यवनेषु कविर्मतः ।
येन नानाकथावेशादुपदेशः परं कृतः ।।६।।
परमेश्वरभक्तेषु एक आसीत्स निश्चितम् ।
कुतोऽन्यथा हि तत्काव्यं सर्वलोकेषु विस्तृतम् ।।१०।।
किञ्च यद्यपि काव्येऽस्मिन् दृश्यन्ते विविधाः कथाः ।
निवृत्तौतु परं तासां तात्पर्यं बहुलक्षितम् ।।११।।
अतो मयापि बहुलात्प्रयत्नात् सारसंग्रहः ।
क्रियते येन बालानां ग्रन्थोऽन्यः स्यात्सुखग्रहः ।।१२।।
श्रीविश्वनाथप्रभुभिर्नियुक्तो बहिरन्तरम् ।[1]
तदाज्ञया करोम्येतं स एवानेन तुष्यताम् ।।१३।।
गद्यस्थाने कृतं गद्यं पद्यस्थाने चमत्कृतिः ।
निजशास्त्रानुसारेण क्वचिन्नवचमत्कृतिः ।।१४।।
तच्छास्त्रीयार्थसङ्गत्यै यमकादिकृते तथा ।
योगवृत्या कृता क्वापि नवीनपदविस्तृतिः ।।१५।।
पुंसश्च बालेन समं रसाभासत्वशङ्कया ।
शृङ्गारसम्पदे क्वापि स्त्रीपुंसोर्वर्णिता रतिः ।।१६।।
वर्णिता मुनयोऽनेके दरवेशादिवर्णने ।
राजादिपदमारोप्य कृता शाहपदोद्धृतिः ।।१७।।
पैगाम्बरस्तुतिस्थानं म्लेच्छराज्येऽत्र तिष्ठता ।
सदसत्त्वोक्तिमयतः संत्यक्तं परिवर्णनात् ।।१८।।
तथाप्यतोषं भजता यथावत्तस्य वर्णनम् ।
हित्वा तस्य स्तुतेः स्थाने कृता स्वगुरूणां स्तुतिः ।।१६।।
तदीयकाले तद्देशपालस्य परिवर्णने ।
स्वराजश्रीमहाराजविश्वनाथगुणस्तुतिः ।।२०।।

---

1. बहिः राजरूपेण अन्तरमीश्वररूपेण ।

शाहजादस्तुतौ राजकुमारपरिवर्णनम् ।
तन्मंत्रीवर्णने मिश्ररूपरामपरस्तुतिः ॥२१॥
श्रीकृष्णपदविन्यासः खुदायादिस्थले कृतः ।
ईश्वरे शास्त्रविज्ञानां सर्वेषामेकसम्मतिः ॥२२॥
एवं मक्कादियात्रासु जगन्नाथादिकीर्तनैः ।
यावनीं गिरमुद्धृत्य रचिता पुण्यसंस्कृतिः ॥२३॥
तदीयनिजवृत्तेषु स्वीयवृत्तमिवार्तितम् ।
अनौचित्यभयात्क्वापि तदीयत्वेन तद्धृतिः ॥२४॥
पुरोक्तस्तु स एवाथो धृतो यत्र कथान्तरे ।
अरबीभाषयेवोक्तः पुनरुक्तो गिरन्तरे ॥२५॥
सोऽर्थस्त्यक्तोऽत्र लिखनात्पुनरुक्तिभिया मया ।
आदौ निवेदिता सम्यक् मयेयं काव्यपद्धतिः ॥२६॥

Closing :

चन्द्रभूवसुमृगाङ्कवत्सरे, माघशुक्लयुगभौमवासरे ।
पुस्तकं विरचितं लिपीकृतं, कृष्णचन्द्रपदयोः समर्पितम् ॥६॥
भगवन्नवलोकयन्निमां, पदपुरतो रचितां सुवाटिकाम् ।
भुवनस्थजनान्विपाठ्य प्रततं भक्तयशो विकासय ॥७॥
चरणं शरणं प्राप्तस्तव रामधनः प्रभो ।
अस्यापि गुलिस्ताँवत् प्रचारः क्रियतां विभो ॥८॥
मुनिभूवसुभूवर्षे श्रावणे कृष्ण भास्करे ।
मयराष्ट्रपुरे **रामधनो** ग्रन्थमलीलिखत् ॥९॥

Colophon :

इति अष्टमद्वारविहारः समाप्तः ॥समाप्ता चेयं रामधनविरचिता पुष्पवाटिका, श्रीराधाकृष्ण-प्रमोदाय भवतु । शिवम् ॥

Post-Colophonic :

बहुकालमिदं तिष्ठेत् काव्यरत्नं मदीयकम् ।
मानुषस्येह देहस्य विश्वासो न स्थितौ क्वचित् ॥
कदाचित् समयेऽनन्ते कोऽपि बुद्धिवरः पठन् ।
संस्मृत्य काव्यकर्तारं प्रदद्यादाशिषं क्वचित् ॥
गुलिस्ताँरचनाकालो हिजरी सनषट्शतम् ।
षट्पञ्चाशद्भिरधिकं कालविद्भिर्विचार्यताम् ॥

विक्रमादित्यराज्याद् भूचन्द्रवस्वेक सम्मितः । (१८११)
पुष्पवाटी विरचनकालोऽयमवधार्यताम् ।।
वृषार्कतनयाभर्तुः सर्वलोकमहेशितुः ।
समर्थस्य समर्थानां पुमर्थानां समृद्धये ।।
श्रीकृष्णस्य प्रमोदायारचयत् पुष्पवाटिकाम् ।
भीमपुर्यां रामधनो विदुषां बुद्धिवृद्धये ।।

एतस्याः किलाष्टौ द्वाराणि, तत्र प्रथमे भूपतीनां स्वभावाः, द्वितीये विरक्तयतीनां, तृतीये संतोषमहिमा, चतुर्थे मौनफलगरिमा, पञ्चमे प्रेमयौवनं, षष्ठे वार्द्धक्यनैर्बल्यवर्णनं, सप्तमे शिक्षासंचाराः, अष्टमे विविधोपदेशविस्ताराः ।।

### 7517. प्रबोधचन्द्रिका by मयाराम

Opening :

श्रीरामपत्कञ्जरोलम्बजयसिंहनृपाश्रितः ।
गौडो मिश्रो मयारामः काशीस्थस्तेन लिख्यते ।।१।।
हरिहरगुरुभक्तः सर्वलोकानुरक्तः, त्रिभुवनसत्कीर्तिः कान्तिकन्दर्प मूर्तिः ।
रणरिपुगणरिक्तः क्षोणिपालेशसेव्यो, जगति जयति दाता सर्वकर्मावधाता ।।२।।
अम्बावतीवदनचन्द्रचकोरवर्यः श्रीविष्णुसिंहतनयो नयतन्त्रवेत्ता ।
कूर्मेशवंशतिलकः सुनृणामधीशो, राजाचिरंजयति वै जयसिंहवर्मा ।।३।।
रामो मेऽभिहितं करोतु सततं रामं भजे सादरं
रामेणापहृतं समस्तदुरितं रामाय दत्तं धनुः ।
रामान्मुक्तिरभीक्षिता सरभसं रामस्य दासोऽस्म्यहं
रामे रज्यतु मे मनः करुणाया हे राम मां पालय ।।४।।
श्री जयसिंहदेवेन रामभक्तिरतात्मना ।
इति संचिन्त्य एकान्ते कदाचित् तिष्ठता सदा ।।५।।

Closing :

ग्रन्थस्य गौरवभिया मया नोक्तं सविस्तरम् ।
एषा विशेषसुभगा समाप्ता सन्धिचन्द्रिका ।।६६।।

### 83. प्रबोधप्रकाशः टी. by विष्णुदासभीम

Opening :

श्रीमन्नारायणं देवं व्यासं गणपतिं गिरं
पुरुषोत्तममानम्य विप्रं वेदान्तपारगम् ।।१।।

बोधचन्द्रोदयस्याहं यथाबुद्धि विवेचनं
श्रीनृसिंहप्रसादेन करिष्ये नातिविस्तरम् ।।२।।
संस्कृते हि दुर्बोधत्वं प्राकृते तु विशेषतः
वासुदेवपरत्वेन भाषया किञ्चिदुच्यते ।।३।।

पूर्वछायुं ।। भाषानुं कारण नहीं, कारण अर्थ विशेष ।
सम्मति एह ऊपरि कहूं, पिंगलि गाथा एष ।।
अथ विशेषो कथं, जायो इसा होअ ।
तज्ज दोष समूहं, अज्जउत पिंगल् ये भणयं ।।१।।
येह अनामिइं ऊपजै विश्व बराबर सूर ।
किरण विषइ दीसइ जथा, मध्य दिवस जलपूर ।।२।।
येहनुं स्वरूप जाणतां, मोह निवर्तइ एह ।
कुसम तणीं माला विषइ, जथा भुजंगम देह ।।३।।
ते हरि सदा उपासीइ, आतमबोध अगाधि ।
सनातन आनन्दघन वर्ज्जित अखिल उपाधि ।।४।।

Closing :

चुपैछन्द : अधीत सकल शास्त्रसिद्धांत । प्रेम अधिक ऊपरि वेदांत ।।
श्रीपुरुषोत्तम तणां प्रसाद । कीधु एह कथा अनुवाद ।।७९।।
किहां पूरु किहां अधिक कह्यूं । किहां एक ग्रंथ मांहि पद रह्यूं ।।
करि प्रणांम कहूं कर जोड़ि । कविजन कोइ म देस्युं खोड़ि ।।८०।।

श्लोक : न्यूनातिरिक्तं यत्किंकिञ्चित् क्षन्तव्यं मे त्वया प्रभो !
प्रीतो भव सुरश्रेष्ठ ! ग्रन्थेनानेन केशव ! ।।८१।।

चुपै : प्रबोधचन्द्रोदय विस्तार । नाटक शान्त महा रससार ।।
भीम भणै नारायणदास । अंक समापति छठु प्रकास ।।८२।।

Colophon :

इति श्री विष्णुदास भीम विरचिते प्रबोधप्रकाशे षष्ठः प्रकाशः ।।

## 81. प्रभावली नाटिका by हरिजीवन मिश्र s/o श्रीलाल

Opening :

पूर्वं यस्य कराः प्रयान्ति गुणतां प्रेमप्रवालस्रजः
पश्चात्कञ्चुकतां महाचलकुचप्रान्ते महीसुभ्रुवः ।
उद्यच्चारुवितानतामथ महाराजस्य चेतोभुवः
पूर्वाशारमणीविलासमुकुरः कोऽयं समुज्जृम्भते ।।

नान्द्यन्ते सूत्रधार : अलमतिविस्तरेण (परिषदं निरूप्य)
अद्याहं तर्कयामि यदेते दिक्पालस्पर्धासमृद्धादराः सदस्यनृपाः हरिजीवनमिश्रेण श्रीमहाराजरामसिंहस्य स्वान्तप्रोत्साहनार्थं शृङ्गाररसपरिपूर्णा महाप्रेम्णा प्रकाशिता या प्रभावली नाम नाटिका तस्याभिनयाय समाज्ञापयन्तीति..........

Closing :

इति श्रीपाश्चात्यगौडान्वयभूषणश्रीवेदवेदान्तसारहारविराजमानहृदयश्रीवैद्यनाथमिश्र—तत्पुत्रसकल-शास्त्रार्थविवेचक श्रीलालमिश्रात्मज हरिजीवनमिश्रविरचिता प्रभावलीनाटिका सम्पूर्णा ।।

### 423. प्रशस्तिरत्नावली by हरिनाथ

Opening :

यत्पादाब्जमकरन्दसस्पृहा सिन्धुजा सुरसमूहमभ्रुवम् ।
नेक्ष्यते ललितभ्रूविजृम्भितैस्तं नृसिंहमनिशं स्मरामहे ।।१।।
प्रशस्तिरत्नावलिका करोतु कण्ठे प्रसक्ति विदुषा मयेयम् ।
सुगुम्फिता श्रीहरिनाथनाम्ना संहृत्य धीरास्यखनिभ्य एव ।।२।।

षट्गुरौ स्वामिनि पञ्च द्वे मित्रे द्विगुणं ह्यरौ
श्रीकारा अग्रतो लेख्या एकैकं पुत्रभार्ययोः ।।
तत्रादौ गुरुषु लिखनप्रकारमाह
Colophon : संवत् १७३६ पौषशुक्लनवम्यां बुधे लिखितं श्रीरामनाथेन ।।

### 256. प्रस्थानाष्टकम् (अष्टकसंग्रहः)

Opening :

चिन्तामन्तः कोऽयं रे वा दन्ते तथैव नो मन्ये ।
न चरति घासग्रासं गजाष्टकं विश्रुतं लोके ।।
चिन्तामिमां वहसि किं गजयूथनाथ !
योगीव योगविनिमीलितनेत्रयुग्म !
पिण्डं गृहाण पिब वारि यथोपनीतं
दैवाद् भवन्ति विपदः खलु सम्पदोवा ।।१।।

Closing :

यद्यपि भवति न हानिः परकीयां चरति रासभो द्राक्षाम् ।
असमञ्जसमिति मत्त्वा तथापि खलु खिद्यते चेतः ।।

The following अष्टकs are compiled :—

1. गजाष्टकम्, 2. चातकाष्टकम्, 3. वृषभाष्टकम्, 4. वानरवल्लभाष्टकम्, 5. भ्रमराष्टकम्,

6. हंसाष्टकम्, 7. जलदाष्टकम्, 8. रत्नाष्टकम्, 9. चक्राष्टकम् । 10. सत्पुरुषाष्टकम् 11. हरिणाष्टकम्, 12. करभाष्टकम्, 13. वृक्षाष्टकम् and 14. प्रस्थानाष्टकम् ।

The ms. is wrongly titled as प्रस्थानाष्टकम् on the upper folio.

5028. **बीजवासनाभाष्यम्** by **हरिदेव** s/o **व्रजनाथभट्ट**

Opening :

ग्रामे गोकुलसंज्ञके समभवद्भद्रो बलाद्यः कृती
शास्त्राध्यापनतत्परः सुकृतिनामग्र्यो गुणैरन्वितः ।
तैलङ्गः खलु कृष्णसेवकवरो मान्यस्तु गोस्वामिनां
श्रीयुक्तः प्रतिवादिकुञ्जरहरिर्मुख्यस्तु प्रेक्षावताम् ॥२॥
तत्सूनुः खलु माधवः समभवत्तत्रैव विष्णोः सदा
सेवातत्परमानसो गुणयुतः शास्त्रार्थवित् सज्जनः ।
सूनू तस्य बभूवतुर्नृपगणैर्मान्यो व्रजाद्यः पुन-
र्नाथो ज्येष्ठतमो महाकविवरः पुरुषोत्तमश्चापरः ॥३॥
व्रजाद्यनाथपुत्रोऽहं हरिदेवाभिधः कृती
भास्करेणोदितं बीजं विवृणोमि यथामति ॥४॥

Colophon :

इति श्रीमन्मार्तण्डात्मजाप्राक्तटस्थगोकुलग्रामनिवासिश्रीमत्प्रचण्डपाण्डित्यमण्डितोद्दण्डपण्डित-मण्डलीमण्डनबलभद्रभट्टात्मजमाधवभट्टसुतव्रजनाथभट्टसूनुना गणकमण्डलीमण्डनेन [हरिदेवभट्टेन] ज्योति-र्विन्नितान्ततोषहेतवे विरचितं बीजवासनाभाष्यं सकलसन्देहापनोदनदक्षश्रीमत्प्रचण्डप्रतापसार्वभौम रामसिंहसजय (विजय) राज्ये अम्बावत्यां अम्बिकेश्वरमहेश्वरपुर्यां अङ्काभ्रनृपमिते शालिवाहनशके (१६०९) मासे चैत्रे पक्षे शुक्ले गुरौवारे सप्तम्यां तिथौ रोहिणीनक्षत्रे समाप्तिमगमत् ।

संवत् १७८२ समये चैत्रमासे शुक्लपक्षे त्रयोदश्यां तिथौ समाप्तोऽयं मङ्गलमस्तु ॥ श्रीमते रामानुजाय नमः ॥ लिखितं द्वारिकादासवैष्णव वृन्दावने शुभमस्तु ॥

5803. **ब्रह्मसूत्रभाष्यवृत्तिः (अणुभाष्यवृत्तिः)** by **श्री कृष्णशर्मा**

Opening :

श्रीवल्लभाचार्येण रचितेऽणुभाष्ये, राजाधिराज जयसिंहनृपाज्ञयैव ।
वृत्तिः कृतार्थकरणी तरणीव सिन्धौ, श्रीकृष्णशर्मा तनुते कृतिनां हिताय ॥१॥
श्रीवल्लभाचार्यकृताणुभाष्यसिन्धूद्गतो ग्रन्थसुधांशुरेषः
विद्वन्मनःकैरवकोरकाणि प्रकाममुल्लासयतु प्रकाश्यैः ॥२॥
अधीतं यद्गुरूणां समीपे चिरायोज्झितं विस्मृतप्राय आसीत् ।
तदुद्भासितं यत्समासक्तिहेतोश्चिरंजीवतादेष राजाधिराजः ॥३॥

श्रौतस्मार्त विधानदक्षिणमतिर्वेदान्तविज्ञानभाक्
श्रीरामाङ्घ्रि सरोरुहप्रविलसद्भक्तिप्रकर्षश्रियः ।
सिद्धान्तीकृतसर्वशास्त्रविषयो विप्राशिषा त्वं चिरं
जीव श्री जयसिंह विक्रमनिधे राजाधिराज प्रभो !

5850. **ब्रह्मसूत्रवृत्तिः (ब्रह्मबोधिनी)** by **सवायी जयसिंह**

Closing :

कृतषोडशदानेन सर्वतोमुखयाजिना
वाजपेयाग्निचयनसप्तसंस्थाविधायिना ।
महाराजाधिराजेन जयसिंहेन धीमता
सूत्रवृत्तिः पवित्रेयं ग्रथिता ब्रह्मबोधिनी ।।१।।

Colophon :

श्रीमन् महाराजाधिराजजीसम्राडग्निचिद्वाचिता सूत्रवृत्ति ब्र्ह्मबोधिनी समाप्ताऽऽनेन श्रीसीतारामौ प्रसीदताम्
संवत् 1787 आश्विन शुक्ल १२ सोमे लिखितं शुभं भवतु ।

2608. **भक्तमाला** by **सवायी ईश्वरीसिंह**

Opening :

पृथ्वीराजनृपावधिः सुविदितो यस्यास्ति वंशः शुभः
सूर्यादुद्भववान् रघुप्रभृतिभिः श्रीरामचन्द्रेणच ।
पूर्वं भूरि विभूषितो विजयते योऽद्यापि क्ष्मामण्डले
श्रीमन्मानमहीन्द्र (मान) महिमा यस्मिन् समुद्योतते ।।१।।
रोचिष्णु चारुनखचन्द्ररुचाऽति शुक्लं, प्रोद्भासियावकरसप्रसरेण रक्तम् ।
चिच्चक्रवर्तिमहिषीचरणारविन्दद्वन्द्वं चिराय निजचेतसि चिन्तयामः ।।२।।
यस्य श्रीजयसिंह नाम नृपती राजाधिराजः पिता
पञ्चाधिक्यशताश्वमेधकरणे श्रद्धालुरेको भुवि ।
भूयः कीर्तिधरः स्वयं रचितवान् यो वाजपेयक्रतुं
यस्याभूद्दशदिक्षु. भूमिविजयः क्षुण्णद्विषत्कण्टकः ।।३।।
सोऽयं श्रीश्वरमेकं नत्त्वा धनसन्ततिप्रदं देवम् ।
श्रीश्वरसिंहो नाम राजा तनुते महाद्भुतं ग्रन्थम् ।।४।।
या भक्तमाला विदुषापरेण भाषामयीयं निरमायि पूर्वं ।
सा सम्प्रति प्रस्फुटसंस्कृतोक्त्या सद्भूष्यतेऽत्र महतीगणासौ ।।५।।

Closing :

भाषामयीं वीक्ष्य स भक्तमालां विद्वत्समूहानुपयुक्तरूपाम् ।
चक्रे स्वयं संस्कृतशब्दरूपां स्वयं नृपः श्रीश्वरसिंहनामा ॥
श्रीश्वरं शुभकरं सदीश्वरं संप्रणम्य सततं स्वभक्तितः ।
श्रीश्वरोऽकुरुत भक्तमालिकां भक्तसज्जनसमूहशालिनीम् ॥

Colophon:

इति श्रीनारायणदासकृतभक्तमाला सम्पूर्णं समाप्तं ॥ शुभमस्तु ॥

## 5632. भगवद्गीताभाष्यम् (भावरत्नकोषः) by सुमतीन्द्र यति

Opening:

श्रीमन्तो जानकीजानेः पदपङ्कजपांसवः
जयन्ति सीतावक्षोजकुंकुमश्रीविडम्बिनः ॥१॥
येनाखण्डि मुदैव खण्डपरशोरुद्दण्डकाण्डासनं
भूदेवीतनयाप्यलक्ष्यसरसैरङ्गैरपाङ्गैरपि
सद्धर्मद्युतिहर्म्यनिर्मितलसन्नर्मोत्थशर्मोदये
श्रीरामो मम मानसेऽखिलसतात्सीतासहायःसदा ॥२॥
श्रीमध्वशास्त्रदुग्धाब्धिमामत्थ्योद्धृतमादरात् ।
ग्रन्थत्रयामृतं येन व्यासराजं तमाश्रये ॥
भूरिमनीषागमचित्करणान् श्रीजयतीर्थव्रतिकृतिशरणान् ।
सन्ततमीडे सुचरितवरणान् वेङ्कटनारायणगुरुचरणान् ॥
अथ तत्कृपया श्रीमज्जयतीर्थाय निर्मिताम् ।
श्रीमद्गीताभाष्यटीकामहं सेवे यथामति ॥

Colophon:

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्गीताभाष्यटीकाव्याख्यायां भावरत्नकोष-समाख्यायां श्रीसूरीन्द्रशिष्यश्रीपादशिष्यसुमतीन्द्रयतिविरचितायामष्टादशोऽध्यायः ॥

## 4180. भवान्यष्टकम् by हरिहरदेव शर्मा

कुञ्जे कोकिलकेकिकोककलिते क्रीडाऽऽकुला कालिके
कण्ठे कापि कृपाङ्कुरा कविकुले काव्यैककल्लोलिनी ।
कल्याणं कुरु कोविदे किल कलौ कुम्भीन्द्रकाञ्चीक्वणत्
केयूरा कुहकङ्ककोपकठिना कल्पान्तकौतूहला ॥१॥

दुर्गा दैत्यदुरन्तदर्पदमनी देदीप्यमाना द्युति
देवी दुर्गतिदारणोद्यमदयादैन्यादिदावा द्रुतम् ।
दोर्द्दण्डद्वयदुष्टदम्भदलिनी दायादरा दीप्यते
दिव्या दानद देव देव दयिता दृग्दीर्घदंष्ट्रोद्भटा ॥२॥

प्राचीने प्रकृते पुराणपुरुषे प्राणप्रिये पार्वति
प्रीत्या पाहि पुनः पुनः परपदप्राप्तिप्रकर्षप्रदे ।
पूज्ये पण्डितपालकप्रणयिनि प्रातःपतङ्गप्रभा-
प्रोत्साहप्रमदप्रतापपरितः पूर्णप्रभावे प्रभोः ॥३॥

नूनं नाम निदेशनम्रनयना नानानने नोन्नति-
र्नारी नृत्यनिनादनर्मनिलया नित्या नरीनर्त्तते ।
निर्देश्या निगमैर्नितान्तनिपुणा न्याये नयेनान्विता
निष्ठानिर्भरनिर्जरे न नमितोन्नेये नृपैर्नायकैः ॥४॥

भव्ये भूरि भुजङ्गभूषितभुजे भालाभिरामे भृशं
भूभर्त्री भवभामिनी भवजभूभ्रूभङ्गभाषाभरा ।
भूषाभिर्भुवने भयङ्करभटा भासाभिभूतभ्रमा
भाव्या भावुकभाग्यदा भगवती भूत्यै भवानी भव ॥५॥

रुद्राणी रमणे रता रतिरुता राजीवरागारुणा
रम्या रात्रि रमा रतीशरसिकारब्धारवा रंहसा ।
रामा रासरती रसज्ञरसना रामा रदै राजिता
रक्षोरक्षकराजराजरुचिरा रम्या रराजोरगैः ॥६॥

मातङ्गी मधुरा मुमोद मदिरा मत्ता महामानिनी
मुख्या मञ्जुलमन्दिरे मणिमये माणिक्यमालामला ।
मर्मज्ञा मधुमोहिनी मुकुरमा मेध्यामराणां मुहु-
र्मध्ये मध्यमनोहरा मुनिमनो माया महीमण्डले ॥७॥

तारे तामरसोत्तमे त्रिभुवने त्रायस्व तापत्रयात्
योग्या या यतियूथयोगयतिदा युद्धे यशोयन्त्रिता ।
शर्वाणी शशिशेखरा श्रुतिशुभश्रौतश्रिता शाम्भवी
घण्टाघर्घरघोषघोरघनभा घर्माशिवघौघा घृणा ॥८॥
हरिहरकविराजनिर्मितं यः पठति नरो वरमष्टकं जितात्मा ।
इहधरदुहिता हिताय तस्य प्रभवति शङ्करशङ्करा शिवा सा ॥९॥

संवत् १८४१

### 4055—सुबोधिनीयोजनानिबन्धः by बालकृष्ण 'लालू' भट्ट

Opening :

मङ्गलाचरणम् ।।
श्रीगोवर्द्धनधारिणं शुभकरं श्रङ्गारमूर्तिं भजे ।
वन्दे नन्दपुरायुपुण्यफलितं श्रीबालकृष्णं प्रभुम्
श्रीमद्वल्लभविठ्ठलेश्वरविभू ध्यायामि सद्वन्दितौ ।
कुर्वे तत्कृपया निरोधविवृतौ सन्देहविध्वंसनम् ।।१।।
नमामि श्रीमदाचार्यचरणाब्जरजांस्यहम् ।
लाभाभिलाषमात्रेण येषां कृष्णः प्रियो भवेत् ।।२।।
अग्नेस्तनूजं ननु जन्तुहेतोराविष्कृतस्वं सततं प्रणम्य ।
दृष्ट्वा तदाज्ञाञ्च विचारये ह सुबोधिनीस्थानगतान् पदार्थान् ।।३।।

### 287. भावनामृतम् by a disciple of चैतन्य

Opening :

श्रीकृष्णचैतन्यघनं प्रपद्ये सम्पाद्य यो ध्वस्ततमःप्रपञ्चं
पञ्चेषु कोटचम्बुदकान्तिधाराःपरम्पराप्यायितसर्वविश्वम् ।
सनातनं रूपमुदीयषो क्षितौ हृदा दधानो व्रजकाननेशयोः
तत्केलिकल्पागम संवलीलिताः सदालिधीरस्त्वनुरागिणीर्भजे ।

Closing :

विश्वाकाशविकारसम्मितशके वारे गुरोः फाल्गुने
विश्वानन्दिनिपूर्णिमाःप्रतिपदोः सन्धौ सरस्योस्तटे ।
गन्धर्वागिरिधारिणोः सरभसं दोलाधिरूढाङ्गयोः
श्रीचैतन्यदिने तदेतदुदगात् काव्यं भजेत् पूर्णताम् ।।१।।
तस्य श्रीगुरुपादपद्ममधुनः केन स्तुवे प्राभवं
यत्पीतं सहसैव हन्त मलिनं मच्चित्तमत्तालिनम् ।
संसारोग्रमतङ्गजागमगिरां विस्तार्य वृन्दावने
राधामाधवकेलिकल्पलतिकावासे सदावीवसत् ।।२।।
संवत् १७७५ वर्षे पौष बदि ११ रवौ लेखः लि० तुलारामेण
श्री श्री श्री श्री श्री महाराजाधिराजजी श्रीमहाराजजयसिंहदेवजीकस्याज्ञया लिखितमिदं तुलारामेण
श्री श्री श्री·······
स जयति सिंधुरवदनो···············

A card containing the the following note is found in the manuscript.–

"A poem composed during the reign of the Maharaja Ram Singh I of Jeypore, A.D. 1676."

5184. **भूपालवल्लभः** by **परशुराम** s/o **श्री कृष्णदेव**

Opening :

।। श्री गणेशाय नमः ।। श्री व्याघ्रेश्वरचरणारविन्दाभ्यां नमः ।।
अवतु स गिरिवरकन्याचेतोहारी हरो युष्मान् ।
यद्भाललोचनानलधूमनिभो भाति मौलिफणी ।।१।।
भूपालवल्लभो ग्रन्थः कृतः पूर्वं सविस्तरः ।
ततो परशुरामोपदेशः स्वल्पो विरच्यते ।।२।।
स्वरो विराजते यस्मात् स्वर इत्यभिधीयते ।
तस्मात् स्वरशास्त्रेषु स्वरस्यैव प्रधानता ।।३।।
श्रीकृष्णदेव पुत्रेण **पर्शरामोपदेशकः ।**
ग्रन्थोऽयं चाति विस्तीर्णः क्रियते भूपवल्लभात् ।।४।।
यथा क्षीरनिधेश्चादौ गायत्री वेदसागरात् ।
तथा सारसुबोधोऽयं कृतः सर्वहितेच्छया ।।५।।
आसीन्निःपायवासी द्विजकुलतिलकः सर्वशास्त्रेष्वधीतः
काण्वः श्रीकृष्णदेवः परहितनिरतो वेदवेदाङ्गवेदी ।
तत्सूनुः पर्शरामः सकलगणितवित् श्री कटाक्षस्य शिष्यः
शिष्यैः सम्प्रार्थ्यमानः कथयति सुगमं पर्शरामोपदेशः ।।६।।

Closing :

ज्योतिषं पृथगभाणि मुनीन्द्रैर्ज्योतिषं पृथगपि स्वरशास्त्रं
सर्वसाम्यमकरोदिदं केचित्तन्मयाऽत्र विहितः पृथु यत्नः ।।३३।।
निर्मलमतिभिर्यद्यपि रचितानि सन्ति जगति शास्त्राणि ।
कुरुते तथापि कौतुकमिव ग्रन्थः सदोपयोगित्वात् ।।३५।।
इति श्री परशुरामपण्डितविरचितभूपालवल्लभः समाप्तिमुपागमत् ।।

17. **मदनाष्टकम्**

Opening :

हरनयनहुताशज्वालया वः **जलाया ।**
रतिनयनजलौघैः **ख़ाक बाकी बहाया ।।**
तदपि दहति चेतो मामकीनं **दुरोगी ।**
मदनशिरसि भूयः क्या बला यागि लागी ।।१।।

Closing :

इति विलपति कान्ता संस्कृतैर्यावनैश्च ।
पथिकजनपुरंध्री लोचनाप्लावनैश्च ।।
कृतदयविधियोगाद् देश ते पीव आया ।
विलुलित गल लागी हर्ष हीये न माया ।। ११ ।।
।। इति मदनाष्टकम् ।। संवत् १७९२ ।।

### 7403. मन्त्रपारायणविधिः

Opening :

श्रीमत्सुरद्रुमनिकेतनसार्वभौम !
सिद्धामरासुरनिसेवितपादपद्म !
सौन्दर्यसागर ! सुधाकरमौलिसूनो !
श्रीवारणानन ! विधेहि कृपाकटाक्षम् ।। १ ।।
कुन्देन्दुशङ्खधवलां धृतमिन्दुखण्डां [चन्द्रलेखां]
शुभ्रांशुकां ललितभूषणभूषणाढ्याम् ।
मुद्राक्षसूत्रमणिपुस्तकशोभिहस्तां
हंसासनां नमत भक्तवरप्रदाञ्च ।। २ ।।
वन्दे गुरुपदद्वन्द्वं वाङ्मनोतीतगोचरम् ।
शुक्लरक्तप्रभाभिन्नं शिवशक्त्यात्मकं परम् ।। ३ ।।

इह लघुस्तोत्रे मायाकुण्डलिनीति श्लोकेन मन्त्रपारायणं कथितं तदत्र विशदीक्रियते—

माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ।।

अस्यार्थः

माया ह्रीं इति, कुण्डलिनी ऐं इति, क्रिया क्लीं इति, मधुमती शुद्धविसर्गः, बिन्दुविसर्गश्चत्वारो मातृकाः इति तासां रूपाणि—

अ–तः अः–पर्यन्तं, क–तः क्षः–पर्यन्तं शुद्धमातृकाः,
अं–तः क्षं–पर्यन्तं बिन्दुमातृकाः,
अः–तः क्षः–पर्यन्तं विसर्गमातृकाः,
अंः–तः क्षंः–पर्यन्तं बिन्दुविसर्गमातृकाः । इति चत्वारो मातृकाः

### 4523. **मन्त्रभाष्यम्** (अष्टमाध्यायपर्यन्तम्) by उव्वट

Closing :

संवद्वेदाद्रिशैलाब्जगुणितेऽथ सहासिते । (१७७४)
षष्ठ्यां बुधदिने भाष्यं हरिलाल अलीलिखत् ।।
अष्टावेव मया लब्धास्त्वध्याया भूपतेर्गृहात् ।
जयसिंहस्य ते चैव लिखिता व्रजभूमिषु ।।

### 7180. **मन्त्रसारः** by नित्यनाथसिद्ध, पार्वतीपुत्र

Opening :

यः शान्तः परमोऽद्वयः परशिवः कङ्कालकालान्तको
ध्यानातीतमनादिनित्यनिचयः सङ्कल्पसंकोचकः ।
आभासान्तरभासकः समरसः सर्वात्मना बोधकः
सोऽयं सर्वमयो ददातु जगतां विद्यादिसिद्धयष्टकम् ।। १ ।।
अथ सर्वजनवश्यमित्यादि—

Closing :

इति पार्वतीपुत्रनित्यनाथसिद्धविरचिते सिद्धखण्डे मन्त्रसारे मृतसञ्जीवनादिकक्षपुटीनां सप्तमोपदेशः ।।

### 7194. **मन्त्रसिद्धान्तकौमुदी** (श्यामाखण्डः) by किशोरमणि भट्ट गोस्वामी

Cpening :

प्रणम्य श्रीगणाधीशं दिव्यौघादीन् गुरूनपि ।
साधकानां हितार्थाय ग्रन्थमेतद्वितन्यते ।। १ ।।
**श्रीमदीश्वरसिंहस्य** जयदुर्गनिवासिनः ।
क्रियते पठनार्थाय मन्त्रसिद्धान्तकौमुदीम् ।। २ ।।

अत्र पञ्चायतने दशविद्यानां पञ्चाङ्गे वा पञ्चदेवतानां अधिकारः कथितः तत्र तदादौ तेषां प्रशंसाः कथनीयाः।तत्रादौ गणेशप्रशंसा—

दलत् कुन्ददन्तश्च तुन्दमन्तद्वलत्सुन्दरोद्दण्डशुण्डाभिरामः ।
अलं बोधहेतुर्विलम्बो दरस्मितः स लम्बोदरो मङ्गलं वो विधत्ताम् ।।

Closing :

इति श्रीमन्महाराजाधिराजश्रीमहाराज**सवाई-ईश्वरसिंहदेवाज्ञया** गोस्वामिकिशोरमणिभट्टविरचितायां मन्त्रसिद्धान्तकौमुद्यां दीपदानं वा निध्यञ्जनं वा पादुकासिद्धिर्वा अलक्ष्याञ्जनं वा कथनं नाम

द्वाविंशत्तमः प्रकाशः ।। इति श्री किशोरमणिना रम्यं श्यामाखण्डं संपूर्णं समाप्तम् ।। संवत् १८०२ वर्षे मासोत्तममासे कार्तिककृष्णा १२ भृगुवासरे ।।

7195. **मन्त्रसिद्धान्तकौमुदी (ताराखण्डः)** by **किशोरमणिभट्ट गोस्वामी**

**Opening :**

प्रसादसंतोषितभक्तवारां सद्देशिकस्वान्तसदा–विहाराम् ।
शिवप्रणीतागमशास्त्रसारां देवीमुदारां प्रणमामि ताराम् ।।१।।

**Closing :**

इति श्रीमन्महाराजाधिराजश्रीमहाराजसवाई–ईश्वरीसिंहदेवाज्ञया गोस्वामिकिशोर-मणिभट्टविरचितायां मन्त्रसिद्धान्तकौमुद्यां स्तोत्र-सहस्रनाम-कवचरहस्यादिवर्णनं नाम प्रकाशः । समाप्तोऽयं ताराखण्डः ।।

6904. **महाभाष्यप्रदीप :** by **कय्यट** s/o **जय्यट**

The 2nd Adhyāya ends:—

इत्युपाध्यायजय्यटपुत्रकय्यटकृते महाभाष्यप्रदीपे द्वितीयस्याध्यायस्य चतुर्थे पादे द्वितीयमाह्निकं । पादः चतुर्थोऽध्यायो द्वितीयः ।
रुक्मिणीवल्लभः कृष्णः सुधीः श्रीरामभक्तिमान्
तत्पुत्रस्य नृसिंहस्य कय्यटोऽयं वर्वर्ति ।।

In the end of the 8th Adyhyāya —

इत्युपाध्यायजय्यटपुत्रकय्यटकृते श्रीमद्भगवत्पतञ्जलिविरचितव्याकरणमहाभाष्यप्रदीपेऽष्टमस्याध्यायस्य चतुर्थे पादे प्रथमाह्निकम् ।। पादश्चतुर्थोऽध्यायश्चाष्टमः।।
श्रुत्वा शास्त्राणि विद्वद्भ्चो यथाप्रज्ञं यथाश्रमम्
भाष्यदीपं व्यधत्तेमं कय्यटो जय्यटात्मजः ।।शुभमस्तु।।
संवत् १७०२ समये अग्रहण वदि एकादश्याम् ।।

314. **माधवविजयकाव्यम्** by **द्वारेश (द्वारकानाथभट्ट** s/o **श्रीकृष्णभट्ट कविकलानिधि)**

**Opening :**

श्रीमहागणपतये नमः । श्रीहयाननो जयति । श्रीनीलमहसे नमः । अविघ्नमस्तु—
मङ्गलाचरणम्—
चतुर्वेदीवेषा बत विदितवेषातिरुचिरा
चिराद्वृत्तोन्मेषा परिगलदशेषागमगिराम् ।
सशब्दार्थश्लेषा शिवसनकशेषादिसुखदा
विशेषान्मामेषा हयवदनहेषा सुखयताम् ।।१।।

Colophonic verse of the 1st canto :—

द्वारेशं कविचक्रचारुचरितः श्रीकृष्णनामा सदा
कृष्णा चाऽजनयत् सुतं भुवि नुतं तं सद्गुणौघैर्युतम् ।
तेनोक्ते व्रजबालकस्य चरिते काव्ये प्रमोदाङ्किते
सच्चिन्तामणिमन्त्रचिन्तनफले सर्गोऽयमौपक्रमः ।। २६ ।।

Subject-headings of the other cantos are :—

द्वितीयः सर्गः—कृष्णचरित्रवर्णनम् in 25 verses.
तृतीयः सर्गः—मथुराचरित्रवर्णनम् in 31 verses.
चतुर्थः सर्गः—राज्याभिषेकवर्णनम् of S. Mādho Singh I in 27 verses.
पञ्चमः सर्गः—गुणवर्णनम् in 26 S'lokas.
षष्ठः सर्गः—प्रतापवर्णनं शत्रुपलायनञ्च in 27 verses.
सप्तमः सर्गः—कीर्तिवर्णनम् in 33 verses.
अष्टमः सर्गः—चित्रवर्णनम् in 36 verses.
नवमः सर्ग :—चित्रवर्णनम् in 31 verses.
दशमः सर्गः—यात्राप्रसंगवर्णनम् in 29 verses.
एकादशः सर्ग—युधिष्ठिरमिलनम् in 27 verses.
द्वादशः सर्गः—काम्यकवनवर्णनम् in 26 verses.
कौतुकवर्णनम् in 22 verses.
त्रयोदशः सर्गः—सौधवर्णनम् in 24 verses.
चतुर्दशः सर्गः—वनवर्णनम् in 29 verses.
पञ्चदशः सर्गः—पुनर्वनवर्णनम् in 36 verses.
षोडशः सर्गः—वायुवर्णनम् in 23 verses.
सप्तदशः सर्गः—पृथ्वीपतिप्रासादवर्णनम् in 26 verses.
अष्टादशः सर्गः—नीतिकथनम् in 31 verses.
एकोनविंशः सर्गः—तत्त्वोपदेशवर्णनम् in 29 verses.

474. **माधवविलासकाव्यम्** by श्यामसुन्दर 'लट्टू' पण्डित

Opening :

**श्रीमद्गणपतिवर्णनम् ।।**

अलिकुलमण्डितगण्डं विघ्नालिध्वान्तमार्तण्डं
सिन्दूरारुणशुण्डं कलये देवं सदा हि गजतुण्डम् ।। १ ।।
स्तम्बेरमास्यबिम्बं भक्तप्रत्यूहतिमिरखरबिम्बं
जगदालम्बं बालं जगदम्बायास्त्वहं समालम्बे ।। २ ।।

श्रीमन्माधवसिंहप्रभुचरितं मनोहारीदं
आर्याशतकमुदारं कलये कलितं नृपाज्ञातः ।। ४ ।।

**श्रीमद्गोविन्ददेवजीकप्रभूणां वर्णनम्—**

माधुर्यपरममूर्तिः कृतनिजभक्तजनकामपरिपूर्तिः ।
गोविन्ददेवमूर्तिर्जयति हि जगतीतले सकले ।। ५ ।।

**गुरुदेववर्णनम्**

वैष्णवमन्त्रूपदेष्टा जयतात् श्रीश्यामरामाख्यः ।
श्रीमन्माधवसिंहप्रभुवरगुरुवर्यवर्योऽयम् ।। २७ ।।
श्रीमद्दीक्षितवैष्णवराजः श्रीश्यामरामशर्मायम् ।
जयतादनिशं जगत्यां माधवराज्ञो गुरुश्चात्र ।। ३७ ।।

Then the order of s'lokas is as follows :—

महाराजाधिराजेन्द्रवर्णनम् (38 to 57), सिंहासनवर्णनम् (58.59), छत्रवर्णनम् (60), चामरवर्णनम् (61), दानवर्णनम् (62 to 68), प्रतापवर्णनम् (69 to 79), खड्गवर्णनम् (80), धनुर्वर्णनम् (81), कीर्तिवर्णनम् (83 to 93), जयपुरवर्णनम् (94 to 101),

श्रीमज्जयपुरमेतन्निर्जरलोकाधिकं मन्ये ।
प्रतिरथ्यं हरिमन्दिरहरसुन्दरमन्दिरोपेतम् ।। ९८ ।।

राजप्रासादवर्णनम् (102 to 108)

श्रीमन्माधवसिंहप्रासादोऽयं विराजते पूर्णः ।
विच्छन्दकप्रभेदैः स्वस्तिकभद्रैः सर्वतोभद्रैः ।। १०४ ।।
सौवर्णकलशपंक्तिः सौधोऽयं सोमकान्तो यः ।
कर्पूरगौरगौरः सोम इव सशङ्करोऽमुष्मिन् ।। १०५ ।।

अन्तःपुरवर्णनम् (109, 110)

चम्वडावतीति नाम्नी महिषी राज्ञः प्रियंवदा जयतात् ।
सौभाग्यभाग्ययुक्ता दीर्घायुः पुत्रपौत्राढ्या ।। ११० ।।

कुमारवर्णनम् (111), गजवर्णनम् (112, 113), अश्ववर्णनम् (114), खेटकवर्णनम् (115, 116), सभावर्णनम् (117 to 121), वसंतोत्सववर्णनम् (122, 123), (माधव)-विलासाख्योपवनवर्णनम् (124 to 129), जलक्रीडावर्णनम् (130 to 134), अम्बिकापुरी-वर्णनम् (135 to 137), शिलामयीवर्णनम् (138), मनसादेवीवर्णनम् (139), ब्रह्मपुरीवर्णनं तत्र विशिष्टपुरुषाणाञ्च वर्णनम् (140 to 151)

निगमत्रयीविदोऽस्यामिष्टापूर्तैकतत्परा विप्राः ।
श्रीमन्माधवसिंहप्रभुवरसंशिक्षका नित्यम् ।।१४१।।

श्रीपौण्डरीकयाजी गङ्गारामाभिधः सूरिः ।
ऋषिरिव बभूव चास्यां पुर्यां भूदेववर्योऽयम् ॥१४२॥
तत्सूनुर्द्विजराजः श्रीरामेश्वराभिधः सूरिः ।
श्रीपौण्डरीकयाजी विराजते ब्रह्मपुर्यां यः ॥१४३॥
श्रीविश्वनाथसम्राट् पुर्यामस्यां जयत्वनिशम् ।
वाडववासवर्यः श्रौतस्मार्तैकतत्परो धीमान् ॥१४४॥
जयति श्रीव्रजनाथः कविरिह सततं व्रजाधीशे ।
प्रकटितदृढतरभक्तिर्जयपुरनगरे पुराधीशे ॥१४५॥
जयति हरिदत्तशर्मा माधवसिंहनृपतिगुरुवर्यः ।
मुनिवरवसिष्ठधर्मा कृतकर्मा देवनर्मायम् ॥१४६॥
स जयति सदाशिवशर्मा मुनिजनधर्मा सुधर्माग्र्यः ।
माधवसिंहसुधर्मासदसि सुधर्मः स्वधमाग्र्यः ॥१४७॥
लक्ष्मीरामपुरोधाः श्री सवाईरामतनुजन्मा ।
राजति भूसुरवर्यो रुचिरायां ब्रह्मपुर्यां यः ॥१४७॥
सकलपुरोहितवर्यो राजपुरोहिताग्रगण्योऽयं तु ।
लक्ष्मीरामपुरोधाः जयतादनिशं जगत्यां हि ॥१४७॥
मधुसूदनसन्नामा रुचिरायां ब्रह्मपुर्यां हि ।
सकलपुरोहितवर्यश्चास्ते गोविन्दभावोऽत्र ॥१४७॥

The latter three verses numbered 147 are written on the margin—

जयति ज्योतिषरायः केवलरामाभिधः सूरिः ।
श्रीमज्जयपुरनगरे पण्डितवर्यः सदाचार्यः ॥१४८॥

The author—

महाराष्ट्री ज्ञातिर्यस्यैषा सर्वविख्याता ।
ऋग्वेदिना च तूलं सर्वामोदं शुभप्रदवर्यम् ॥१४९॥
विप्रगदाधरजनुषा लट्टूपाख्येन विज्ञेन ।
विरचितमिदमार्याणां शतकं श्यामेन सुन्दरान्तेन ॥१५०॥
माधवसिंहविलासप्रथमं शतकं तदार्याणाम् ।
उपगीतिगीतियुक्तं नाम्ना वर्वर्तु विख्यातम् ॥१५१॥

**Colophon :**

इति श्रीमन्महाराजाधिराजराजेन्द्रपृथ्वीनाथसकलनृपतिमुकुटमणिश्रीमन्माधवसिंहजीकं-देवविलासार्याशतकं समाप्तिं पफाण ॥माधवविलासकाव्यमिदं विजयतेतराम् ॥
शालिवाहनशके शुभान्विते नेत्रपद्मऋतुभूमिसम्मिते ।
सप्तेन्दुदिग्गजावनीयुते हायने शुभेतरे मनोहरे ॥१॥

मासि सुन्दरतपस्यपाण्डुरे पक्षके तपनवासरान्विते ।
सत्तिथौ हि शुभसंज्ञके वरे शुक्लयोगयुतके जनमोदे ।।१।।
श्यामसुन्दर इति प्रथितोऽसौ सततं प्रणतरामपादाब्जः ।
वाडवो जयपुराभिधे पुरे पुस्तकं वरमलीलिखत् सुधीः ।।३।।

It is followed by 14 eulogical s'lokas in different metres.

462. **मानवंशवर्णनम्**

Opening :

मङ्गलनामस्मरणं हेरम्बं भारतीं नत्वा ।
वर्णयितुमारभेऽहं वंशं श्रीमानसिंहस्य ।। १ ।।
धरायां काकुत्स्था भुवनविशदस्थास्नुयशस-
स्स्वराज्यस्वाराज्यप्रभवविभवश्रेणिसुभगाः ।
बभूवुर्भूपाला निखिलवसुधापालनपराः
पुरा सौरे वंशे सगररघुरामप्रभृतयः ।। २ ।।
खड्गाघातविखण्डितारिनिवहश्रीमानसिंहागम-
त्रस्यद्वंगधराधिपप्रणिहिताऽगाधेऽम्वुधावम्बिका ।
खड्गक्षालनरक्तगन्धमुदिता सूवाच तं स्वप्नगा
साम्राज्यं भज वीर वारिधितलाद्धाम स्वकं मां नये : ।। ८ ।।
यत्नाद्रत्ननिधेर्निधानमिव तां रत्नव्रजानां शनै-
रुन्नीयानयति स्म सद्म स निजं सम्पूज्य साम्राज्यदाम् ।
जित्वा सत्वरमुद्धतानपि रिपून् द्वीपाधिपाँश्चिह्नयन्
तत्तद्धामसु पंचरागरचनानुच्चैर्बबन्ध ध्वजान् ।।६।।
प्रासादे विहिते स्वसौधसविधे शैले सरोरोधसि
श्रीमानुत्तमकान्तिशालिनि वरे देवीं वरेण्यां दिने ।
आधायापि सुपूज्यभूरिविभवो राजोपचारार्पणैः
संजज्ञे भृकुटीविधेयविकटक्षोणीशशिक्षोत्कटः: ।।१०।।
आम्बेरीं लसदम्बिकानिलयिकां शैलावलीदुर्गमां
गुप्तस्पर्शमहावटाभिधसरस्तीरे तरूदंचिताम् ।
आस्थाय स्थिरधीरधीतसमरो भाति स्म शासद्दिवं
पूर्णश्रीरमरावतीपतिरिव श्रीमानसिंहो भुवम् ।।११।।

The above verses bear testimony to the installation of the idol of Devi (S'lāmayī), acquired from Banga Desha, by Man Singh in a temple

constructed near his palace at Amber. Also there is a reference to the five-coloured flag (V. 9) of Amber and the location of the palace and the temple on the bank of the Mahāvaṭā tank.

A tribute to Jagat Singh, his son Mahā-Sinhg and grandson Jai Singh is contained in the following verses :

पश्चाद्यश्च विपश्चिदुत्तमयशाः श्रीमानसिंहात्मजो
वीरव्रातजयव्रतो ननु जगत्सिंहोऽभ्यधायि श्रुतः ।
तत्सूनुः सुनतो जनैरथ महासिंहो महाविक्रमो
विक्रान्तं जयसिंहमाप विजयश्रीशालिनं नन्दनम् ॥१८॥
अष्टाषष्टिषडेकविक्रमशके षड्वक्त्रसद्विक्रमो (१६६८ वि०)
जज्ञे विज्ञमनोज्ञधीरधिशुचि श्रीलः सतिथ्यां शुचेः ।
कृष्णो जिष्णुगुणोऽध्युवास पृथुको द्योसाभिधानं गिरिं
दुर्गं कञ्चिदनेहसं च ववृधे शुक्ले यथा शुक्लगुः ॥१९॥

Mirza Raja Jai Singh's son and successor Ram Singh is praised:—

श्रीमान्नीतिबलातिशायि विजयश्रीरामसिंहो नृपो
लोकानन्दकृचारुकर्मचतुरो विद्वत्सु चिन्तामणिः ।
स्वर्णश्रेणिसुवर्षणैर्गुणिगणान् सारंगवर्गानिव
प्रीत्या सत्कविकेकिवर्णितगुणो रेजे स धाराधरः ॥२६॥

Ram Singh's grandson, Viṣṇu Singh succeeded him. Jai Singh (after wards Savai Jai Singh) was born to him, whose birth and 'samskaras' are described at length in this poem. This appears to be the main theme of the work, composed during the time of Viṣṇu Singh.

The ms. remains incomplete at verse 100th.

### 48. मानसिंहप्रतापकल्लोलः by त्रिमल्ल भट्ट

॥ श्रीगणेशाय नमः ॥

Opening :

आस्ते श्रीमानसिंहः क्षितितिलकमणिः सर्वसर्वंसहायाः
नाथः पुण्यपवित्रः प्रतिनृपतितमस्तोमसोमः क्षमायाम् ।
गाम्भीर्यस्थैर्यधैर्यप्रणयनयचयः क्रौर्यसौन्दर्यशौर्यो-
दार्यादीनां गुणानां खनिभिरनुलवं राजभिर्वन्दितांघ्रिः ॥१॥

तस्योर्वीन्द्रस्य किंचिद्गुणलवममलं वारिराशेरिवाम्भो-
बिन्दुं ब्रूते त्रिमल्लः पुरमथनपदध्यानलब्धप्रभावः ।
दुष्टानां निग्रहाय श्रुतिगदितलसद्धर्मकर्मावनाय
त्राणाय शेषसाधोरपि च धृतव्रतो जन्म विष्णोरिवात्र ॥२॥

Colophon :

इति श्रीमहाराजाधिराजराजामानसिंहस्य प्रतापकल्लोलाख्यं समाप्तं ॥ इति श्रीमानसिंहस्य …………महीयसः गुणाम्भोधेः त्रिमल्लेन बिन्दुरेकोऽत्र वर्णितः । संवत् १७४५ कार्तिक कृष्णा ....दश्यां लिख्यतं हृषीकेशप्रोहितेन । शुभमस्तु ॥ प्रोहितश्रीधरस्य आत्मजेन गढआंबेरिमध्ये राजा-विष्णुसिंहराज्ये । राजाजी श्री विष्णुसिंहजीदर्शनार्थम् । श्रीरस्तु ॥

Post-colophonic :

नीदीतटे [ नदीतटे ] बागमध्ये रहड़स्थाने पुस्तकं लिखतं । साध रामदास दादूपंथी लिखाय्यतं महाराजाधिराज राजाजी श्री ५ स्यामस्यंघजी संवत् १७८१ वैशाष मासे कृष्ण पखे ती…………मवासरे संपूर्ण शुभमस्तु ॥

### 231. मुद्राराक्षसटीका (मुद्रादीपिका) by ग्रहेश्वर

Opening :

त्रैलोक्यं रङ्गभूमिः सकलगणवृता नायिका शैलपुत्री
व्योमैवान्तर्वितानं निजवसनवरं वाद्यभाण्डं कपाले ।
आनन्दप्राप्तिरुच्चै कलिकलुषहतिर्यस्य लाभो जनानां
स्थाणुर्विश्वैकदृश्वा सकपटनटना नर्तको नः पुनातु ॥१॥
यद्यपि ते ते गुणिनो येषामग्रे न मेऽस्ति वाचनशक्तिः
तदपि च तदनुग्रहभूर्भवितुं वाञ्छा ममास्तीह ॥२॥
स्तव्यावुभावपि जनौ मम…………जात्याप्यलंकृतगुरुर्गुरुभिर्गुणौघैः ।
सर्वस्वभावमहिमाहितनम्रभाव आविर्भवद्भवनभव्यविभावनीयः ॥३॥
निर्विघ्नं वितरत्वनेकपमुखः कालीक्रियाभावुकः
ब्रह्माद्या सकलेषु सिद्धिविधिषु प्रीताः प्रसीदन्तु मे ।
किञ्च स्वेषु परेषु तुल्यमतयो विश्वोपकारक्षमाः
साधूनामपि सद्गिरो मम हिते स्थैर्यं व्रजन्तु ध्रुवम् ॥४॥
सर्वः पश्यतु सन्मार्गं नान्धकूपे निमज्जतु ।
चित्तवृत्तिरियं साधोर्द्वैपायनमुनेरिव ॥५॥
मिश्रवटेश्वरगुरुतोऽधीत्य यत्किमपि चेतसाकलितं
तन्नेशतो विवेको मम यत्नः शुद्धसंसिद्धयै ॥६॥

नत्वा शंकरचरणं स्तुत्वा साधुमुदितमाहात्म्यं
कुरुते ग्रहेश्वराख्यो मुद्रायां दीपिकां यत्नात् ।।७।।

Closing :

देशे श्रीभीरभुक्तौ कविशतमहितश्चक्रपाणिर्गुणाढ्यः
श्रीवत्सस्तत्रप्राभून्नयविनयमयस्तत्त्वविद्यः कवीन्द्रः ।
तत्पुत्रः ख्यातकीर्तिः कविवरगणितः श्रीजयादित्यधीरः
श्रीदेवस्तत्सुतोऽभूत् तदुचितनयः पण्डितो रामशर्मा ।।
सिद्धेश्वरस्तत्तनयो बभूव द्विजेन्द्रवर्गे गणितः प्रतिष्ठः ।
तत्सूनुरानम्रशिरो गुरुभ्यो ग्रहेश्वरः सन्नयमार्गसेवी ।।
तेनेयं रचिता धैर्यतो मुद्राख्या नाटके टीका ।
सज्जनमनःसु तोषं धत्तां तत्त्वस्य बोधेन ।।

Colophon :

इति महामहोपाध्यायश्रीग्रहेश्वरविरचितायां मुद्रादीपिकायां सप्तमोऽङ्कः समाप्तः ।।
संवत् १६६८ समये आषाढ वदि १० शुक्रवारे काश्यां संपूर्णतामगात् ।।

5017. मुहूर्तशिरोमणिः by हरिलाल मिश्र, s/o वंशीधर, p/o जगन्नाथ सम्राट्

Opening :

यदपि सन्ति बहूनि पुरा कृतान्यनघसूरिभिरब्दमुखाकृतौ ।
तदपि तद्गतसारसुसंग्रहं कमपि वच्मि मुहूर्तशिरोमणौ ।।३।।
मुहूर्तचिन्तामणिरत्नमाला युगे युगे साम्प्रतमिष्टकृत्ये ।
दैवज्ञवर्यैः सकलैः प्रमाणीकृतं यतस्तद्युगलार्थसारम् ।।४।।
आदाय सारं हरिलालमिश्रः चकार सच्छिष्यहिताय सम्यक् ।
पठत्यमुं यश्च मुहूर्तकृत्ये कृत्यं न किञ्चिद् भवतीह शास्त्रैः ।।५।।

On the margin :

श्रीमत्सपादजयसिंहकृते प्रबन्धं, प्राग्विस्तृतं सुकलितं सुमुहूर्ततत्त्वम् ।
संक्षेपतोऽत्र विलिखामि शिरोमणौ हि, बाणाभ्रभूसुहयमेधकृतं प्रसन्नम् ।।

On p. 48

श्रीमच्छ्रीजयसिंहदेवनृपतेः कीर्त्यै नवीने पुरे
ग्रन्थं नव्यमरीरचद् हरिकृपालेशाद् यथासौविधम् ।
वर्षे रामनवाद्रिभूपरिमिते मासे शुभे फाल्गुने (१७६३)
पक्षे शुभ्रतरे हिमाचलसुतातिथ्यां विधोर्वासरे ।।

तस्मिन्नह् नृपतिसंसदि शास्त्रसंघं संवाचयन्ननुदिनं प्रतिसंवसामि ।
संदर्भ्य शास्त्ररचनां हरिलालमिश्रः पूर्ति करोमि बहुविस्तरभीतितोऽद्य ।।
यस्मिन्दिने चरणयुग्जयसिंहपुर्या आरम्भ उद्भटतरोर्जयसिंहदेवात् ।
तस्मिन्दिने जयहरेर्नगरस्य कीर्त्यैश्चोपक्रमोऽत्र हरिलालकवेरवेहि ।।
यस्मिन्दिने जयपुरस्य समग्रशोभा पूर्तिर्भवेदिह च लक्ष्यमिति प्रबन्धे ।
श्रीमद्गणेशगुरुवाक्कृपया भवित्री चेज्जीवनं मम······················ ।।

Closing :

साङ्घ्रचब्जभूपजयसिंहनरेन्द्रदेवैः साङ्घ्रचब्जपत्तनविधौ जयनाम्नि तद्वा ।
सिद्धान्तसिद्धरचना प्रकृता च तस्यां नक्षत्रदर्शनमलङ्करणीयमेव ।।
मयापि राजेन्द्रपुरस्य विश्रुतौ ग्रन्थे नवीने लिखिते सुशास्त्रात् ।
सम्राड्जगन्नाथगुरूक्तशास्त्राद् विचार्य रूपाण्यपि सम्भवन्ति ।

The author :

गोत्रे सांस्कृतिनो बभूव मतिमान् श्रीभानुनामा बुधः
साक्षाद्भानुरिव प्रतिष्ठित अलं त्रिःस्कन्धविज्ज्योतिषाम् ।
वेदाभ्यासरतः सुधर्मनिरतः श्रीलूनकर्णादयः
श्रीमद्रायसलादयो नृपतयो यन्निघ्नतामागताः ।।११।।
येन कृतं बहुसुवर्णमनन्तरत्नं दानं तुलापुरुषसंज्ञितमन्यदानैः ।
श्रीमत्पुरेऽमरसरे प्रथिते पृथिव्यां पश्चाच्च खण्डनगरेऽपि क्रियन्ति तेन ।।१२।।
तस्माद् बभूव मतिमान् बुध कृष्णशर्मा श्रीकृष्णभक्तिनिरतः प्रथितःसुकर्मा
तस्यात्मजस्तु हरिवंश इति त्रिपाठी भक्त्यातिरुद्रविधिवेदषडङ्गपाठी ।।१३।।
तस्माद्दयालुरभवत् सकलागमज्ञो दान्तो दयालुरनघः श्रुतिशास्त्रवेत्ता ।
तस्यात्मजस्तु सुखदेव इति पृथिव्यां ख्यातस्सुधी गणितवारिधिवायुपुत्रः ।।१४।।
वंशीधरश्चास्य सुतो बभूव वंशीधराराधनलब्धसंपत् ।
वृन्दाटवीकुञ्जसुकच्छभूमौ कलिन्दजातीरनिवासचित्तः ।।१५।।
तस्मादहं समभवं हरिलालमिश्रः पुत्रस्तदीयपदपङ्कजसेवनेन ।
ग्रन्थान् प्रकर्तुमलमत्र न मे श्रमोऽस्ति वंशीधरस्य कृपया न किमप्यलभ्यम् ।।१६।।
श्रीमत्सपादजयसिंहसभासु मान्यं लोके प्रसिद्धिरतुला महिमा रमा च ।
सर्वं यदन्यदपि मे सुतसम्पदादि कान्ता वसन्ततिलका च हरेः कृपेयम् ।।१७।।
तिथेः सैको वारः श्रुतिसहितमृक्षं त्रियुजियुक्
तदैक्यादक्षघ्नाद्रसगुणलवोमाः सितदलाम् ।
समस्तैक्ये वर्गेऽतिधृतिसहिते वत्सर अभूद्
य एवं जानीयात् स च भवति पूतौ शिखरिणी ।।१८।।

तिथिर्गौया वारो विद उडुभगस्यापि सुभगो
वरीयान् योगे माः नभस इह चाद्यं दलमपि ।।
त्रिनागेभाद्रचब्दः सकलमभवद् ग्रन्थमिह मे
हरेः श्रीराधायाः स्मरणलवपुण्याच्छिखदिणी ।।१६।।

The ms. appears to be in the handwriting of the author.

The following inferences can be drawn from the extracts cited above:—

1. हरिलाल मिश्र completed the work मुहूर्त्तशिरोमणि on फाल्गुन शुक्ला ३ संवत् 1793. This was the day when the new city of Jaipur had attained its full bloom (सम्पूर्णशोभा) on its completion.

2. The author compiled this work according to the s'āstras referred to by Jagnnātha Samrāt, his guru.

3. Sawai Jai Singh named the new city as 'Sawai Jaipur' (साङ्घ्रचब्ज-पत्तनविधौ जयनाम्नि तद्वा)

4. The author was originally a resident of Shekhawati. His great-grand father Bhānu Pandit (भानुनामा बुधः) came in contact with Lūṇakarṇa and Rāyasal of Amarsar, who later occupied Khanḍelā (खण्डनगर)

5. The pedigree of the author is as below:—
भानु पण्डित—कृष्ण शर्मा—हरिवंश त्रिपाठी—दयालु—सुखदेव—वंशीधर—हरिलाल

वंशीधर made वृन्दावन as his abode. हरिलाल received his education from his father. It is just possible that हरिलाल came in contact with Sawai Jai Singh at वृन्दावन or Mathura during the latter's governorship of those regions. He acquired eminence, wealth and every thing under the patronage of Sawai Jai Singh.

6. In the last two verses perhaps the years and the dates of the beginning and the completion of the work are mentioned.

228. **मृच्छकटिकटीकाप्रकरणम्** by **पृथ्वीधर** under orders of **रामसिंहमिथिलाधिपति ।**

**Opening :**

**शेमुषीप्रौढिजीवातुविवृतिं मृच्छकटिके**
**पृथ्वीधरश्चिकीर्षन्द्विर्गणेशो गुण्यते गुरुः ।।१।।**

बालानां सुखबोधाय गुरूणां वचनं शुभम् ।
लिख्यते गहनेऽप्यत्र हेरम्बावनतिस्थिरैः ।।२।।
प्रकरणं चेदं तस्य लक्षणम् :—

यत्र कविरात्मबुद्धया वस्तुशरीरं च नायकञ्चैव विरचयति समुत्पाद्य तज्ज्ञेयं प्रकरणं नाम । चतस्रो वृत्तयः पंचसन्धयोऽष्टशशादयः प्रकरणतो नाटकं विहाय नृपनायकम् । आदिशब्दाद्व-दादिग्रहणम् । नाटकादौ बहुप्रकारप्राकृतप्रपञ्चेषु चतस्र एव भाषाः प्रयुज्यन्ते । सौरसेनी-अवन्तिजा-प्राच्यामागध्यः । अपभ्रंशप्रपञ्चेषु चतस्र एव भाषाः प्रयुज्यन्ते । शकारीचाण्डालीशाबरीढक्कदेशीया । मृच्छकटिके तु शबरपात्राभावात् शाबरी नास्ति । प्राकृते मागध्यवन्तिजा प्राच्या सौरसेन्यर्द्धमागधी वाह्लिका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः महाराष्ट्रादयः काव्य एव प्रयुज्यन्ते । अपभ्रंशे शकारा-भीरचाण्डाल शबरद्राविडोड्रजाः । हीना वनेचराणाञ्च विभाषाः सप्त कीर्तिताः विविधभाषाविभाषाः हीनपात्र प्रयोज्यत्वात् । हीनावनेचराणाञ्चेति ढक्कविभाषासंग्रह : । तत्रास्मिन् प्रकरणे प्राकृतपाठकेषु सूत्रधारो नटी रदनिका मदनिका वसन्तसेना एतन्माता चेटी कर्णपूरका चारुदत्तब्राह्मणी शार्विलकः श्रेष्ठी एते एकादश सौरसेनीभाषापाठकाः । सूत्रधारोऽप्यन्यथा कृती कार्यवशादिति वक्ष्यते । अवन्ती भाषापाठकौ वीरचन्दनकौ, प्राच्यभाषापाठको विदूषकः । संवाहकः शकार वसन्तसेना चारुदत्तकान्ता चेटकत्रितयं भिक्षुश्चारुदारकः एतेषट् मागधीपाठकाः । अपभ्रंशपाठकेषु शकारीपाठको राष्ट्रियः चाण्डालीभाषापाठकौ चाण्डालौ । ढक्कभाषापाठकौ मयूरघृतकरौ तथा सौरसेनी अवन्तिजा प्राच्या एता श्रुत्युपकारका तत्रावन्तिजा रेफवती लोकोक्ति बहुला प्राच्या प्रार्थी ककारप्राया मागधीतालव्य शकारवती शकारी चाण्डाल्यास्तालव्यशकारता रेफस्य च लकारता। लकारप्राया ढक्कविभाषा संस्कृतप्रायत्वे दन्त्यातालव्यशकारयुक्ता च ।
अपार्थक्रमं व्यर्थं पुनरुक्तं हतोपमम् ।
लोकन्यायविरुद्धं प्रशकारवचनं विदुः ।।

Closing :

मृच्छकटिकविवृतिरियं गणपतिचिंतयापरपर्यन्ता ।
पृथ्वीधरकृतिस्तु तनयतु सन्तोषं कृतिसमुद्रे ।।

Colophon:

इति मिथिलाधिपतिश्रीमद्रामसिंहदेवकृतमृच्छकटिकटीकाविवृतौ दशमोऽङ्कः समाप्तः ।। शुभमस्तु ।।

It transpires that पृथ्वीधर has written a विवृति on ct. by गणपति at the instanee of Ram Singh,king of Mithilā.

### 178. मेघदूतावचूरिका by सुमतिविजय

Opening :

शारदाञ्च गुरुं नत्वा मेघदूतावचूरिका ।
सुमतिविजयेनेयं क्रियते सुगमान्वया ।। १ ।।

Colophon :

इति श्री मेघदूतावचूरिः समाप्ता ।।

राजरञ्जनदक्षाश्च पाठका मुनिमण्डले ।

जीयासुर्धीधनाः शश्वत् श्रीमद्विनयमेरवः ।। १ ।।

सुमतिविजयेनेयं विहिता सुगमान्वया ।

वृत्तिश्चात्र सुबोधार्थं तेषां शिष्येण धीमता ।। २ ।।

विक्रमाख्ये पुरे रम्ये ऽभीष्टदेवप्रसादतः

मेघदूताभिधानस्य पूर्णकाव्यस्य सौख्यदा ।। ३ ।।

इति श्री मेघदूतटीका सूत्रान्विता सम्पूर्णा । संवत् १७६३ वर्षे मिति भाद्रवा बदि सप्तमीदिने लिखिता पं सुजानसिंहर्षिणा ।। श्रीमन्नागपुरान्तरे लिखिता ।। शुभं भवतु लेखकपाठकयोः ।।

विक्रमपुर is बीकानेर and नागपुर is नागौर ।

## 290. युधिष्ठिरविजयकाव्यम् by वासुदेव परमशिवयोगी

Opening :

प्रदिशतु गिरिशस्तिमितां ज्ञानदृशं वः श्रियञ्च गिरिशस्तिमिताम् ।

प्रशमितपरमदमायं सन्तः सञ्चिन्तयन्ति परमदमायम् ।। १ ।।

Closing :

सुखेन नागसाह्वये पुरेऽवसत् स भारतः ।

ररक्ष गां पुरूरवाः पुरेव सत्सभारतः ।। १०५ ।।

Colophon:

इति युधिष्ठिरविजयेऽष्टमश्राश्वासः ।। ८ ।। समाप्तः ।।

संवत् १६६७ वर्षे पौषकृष्ण चतुर्थी रवौ लिखितं लिखापितं वेणीदत्तभट्टेन ।।

## 356. रघुवंशस्य शिशुबोधिनी टीका अवचूर्णिः by गुणरत्नगणि

Post-colophonic :

रघुवंशमहाकाव्ये बालानां बोधहेतवे ।

गुणरत्नगणिर्वादी कृतवान् वृत्तिमुत्तमाम् ।। १ ।।

श्रीमद्योधपुरे दुर्गे मुनिषड्रसमामिते । (१६६७)

वर्षे गुणरत्नाख्यष्टीकामियं बालबोधिनीम् ।। २ ।।

शुभं भवतु ।। वा. रत्नविशालगणिना लिखितं पण्डितलब्धिविजयवाचनाय । शुभमस्तु लेखक-पाठकयोः ।। ग्रंथाग्रं ७००० ।। श्री ।। श्री ।। संवत् १६६४ वर्षे फाल्गुन बदि १० दिने ।।

### 358. रघुवंशकाव्यटीका (रघुदीपिका) by श्रीकृष्णभट्ट s/o केशवाचार्य

Opening :

सा देयात् भारती वचोवैभवं भवतां सदा ।
यस्याः प्रसादलेशेन वचोयुक्तिर्गुरोरपि ।। १ ।।
कालिदासगिरा क्वामू क्वचास्माकमिमाधियः ।
न हि मन्देन दीपेन दीप्यते नाट्यमण्डलः ।। २ ।।
पुरातनीःसमालोक्य टीका यत्नेन धीमता ।
कृष्णभट्टेन विवृती रघुवंशस्य तन्यते ।। ४ ।।

Colophon :

इति श्रीमन्महोपध्यायश्रीकेशवाचार्यसुतश्रीकृष्णभट्टविरचितायां रघुकाव्यदीपिकायां सन्देहविषौषध्यां अग्निवर्णनं नामैकोनविंशः सर्गोऽन्तिमः ।।शुभं भवतु ।।

Post-colophonic :

यं प्रासूत पुरा पुरारिचरणद्वन्द्वाम्बुजाद्यः सुधीः
सत्कीर्तिः प्रथमं [च] बुद्धिविभवः श्रीकेशवार्यः सुतम् ।
लक्ष्मीरप्यरविन्दसुन्दरमुखी श्रीकृष्णभट्टाभिधं
धीरोदात्तगभीरवाक्यरचनाचातुर्यवारां निधिम् ।। १ ।।
सवित्रीमर्थजातस्य समग्रगुणगुम्फिताम् ।
तत्कीर्तिमालोक्यानन्यां को वा मूर्ध्नि न धारयेत् ।। २ ।।
यो वेदानध्वगीष्ट प्रथितपृथुमतिर्ब्रह्मचर्येण भूत्वा ।
भाष्यं पातञ्जलं यः प्रकटितधिषणः शास्त्रमुख्यं विचारीत् ।
श्रीमत्पर्वतदेशजः सुचरितः काश्यामवासीच्चिरं
तस्येमां रघुकाव्यहारलतिकां कण्ठे कुरुध्वं बुधाः ।। ३ ।।
इति रघुकाव्यदीपिका समाप्तेयमिति शुभं भवतु ।।
संवत् १६२९ वर्षे आसोज सुदि १५ रवि दिने ।। गणेशःश्रीः ।।
श्री श्री नयविमल तथा कनिष्ठभ्राता गणेश श्रीविमल पठनार्थं......लि० हरजी ।

### 2004. रत्नावली नाटिका भाषा by पद्मपाणि

Opening :

।। श्री महागणपतये नमः ।। श्रीः ।।

पार्बती कर छांडी जु फूलन की अंजलि सो तुम्हारी रक्षा करौ ।। पार्वती कैसी हैं ।। चरणन्ह के अग्रन्ह करि ठाढी भई है । अर स्तनन्ह के भार करि नंम्र करियत है ।। अर जो महादेव करि अनुराग सहि तिहूँ नेत्रन्ह करि देषीयत है ।। अर महादेव की सेवा करत जो

लज्जित होत है ।। अर रोमांच । स्वेद । कंप । इन्ह सहित है ।। अंजुलि कैसी है । महादेव के माथे मै डारिबै कौ विचारी है पै कंपतै बीच ही गिरी है ।। १ ।।

दूसरै श्लोक कौ अर्थ कहीयत है ।। प्रथम समागम विषै पार्वती तुम्हारी रक्षा करौ ।। सो पार्बती कैसी है ।। उतकंठा तैं महादेव कै निकट कौं उतावली चली है पाछै सहज लज्जा करि फिरी है ।। ते ते बंधु बधून के बचन करि बहुरि जो सामुही करी है ।। पाछै महादेव कौं आगै देखि कंप रोमांच सहित जो भई है ।। पाछै महादेव करि हसिकै आलिंगी है ।। २ ।।

Closing :

रानी बोली रतनावली आव ।। तेरौ अभिलाष पूर्ण करौं ।। यह कहि आपने अलंकार रतनावली कौं पहिराये ।। अर बोली हाथ गहि ।। महाराज यह रतनावली लीजै ।। राजा आनंद सहित हाथ पसारि बोले ।। तुम्हारौ प्रसाद बड़ौ करिकै कौन न मानैं ।। यह कहि रतनावली लई ।। रानी बोली या कौ पीहरि दूरि है ।। सु करिबी जैसै आपने भाई बन्धन्ह कौं समरै नाहीं ।। राजा बोले, जु आग्या ।। विदूषक आनंद सहित नाचन लागो ।। अर बोल्यौ, ही ही बड़ौ आनंद ।। मित्र के हाथि सब पृथ्वी आई ।। वसुभूति बोले, रानी तू महानुभाव है ।। रत्नावली रानी के पाइ लागी ।। राजा बोले, अब मेरौ श्रम सफल भयौ । जोगंधरायन बोले ।। महाराज! और तुम्हारौ प्रिय कहा करौं ।। राजा बोले, और यातैं कहा प्रिय है । जु सब संसार कौ सार रत्नावली पाई ।। जो सब पृथ्वी के पाइबे कौं हेतु है ।। अर रांनी प्रसंन भई ।। कोसलदेस जीते ।। तातैं अब कहा रहचौ जाकी हौं ईछा करौं ।। तथापि यह होउ ।। इंद्र बरषौ ।। संपूर्ण पृथ्वी अंन करि पूर्णहोउ ।। ब्राह्मण जग्य करि देवतां कौं संतुष्ट करौ ।। साधु पुरुषन्ह स्यौं संग होउ, दुष्टन की बाणी नष्ट होउ ।। इति निष्क्रान्ताः सर्वे ।। चतुर्थोंकः ।। ४ ।। समाप्ता रत्नावलीनाम नाटिका ।।

बिशिषबसुबसुमतीश (१६८५) प्रमिते ऽब्दे पौषकृष्णपंचम्यां ।।
रत्नावली प्रयत्नादखिलेयं भाषया लिखिता ।। १ ।।
राजाधिराजस्य नियोगयोगाद्रत्नावली श्रीजयसिंहयूनः ।
श्रीपद्मपाणेर्वचनप्रपञ्चैर्नृ भाषयाऽलेखि मनोहरेण ।। २ ।।

।। श्रीरस्तु ।। महाराजाधिराजमहाराजश्रीमानसिंहजी तत्पुत्र महाराजाधिराज महाराज श्री जगत सिंह जी ।। तत्पुत्र महाराजाधिराज महाराज श्री महासिंहजी तत्पुत्रमहाराजाधिराज महाराजी श्रीजयसिहजी चिरंजीव ।। कल्याणं भूयात् ।। लिषतं मनोहर महातमा ।। १ ।।

स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु, गोबाजिहस्तिधनधान्यसमृद्धिरस्तु ।
ऐश्वर्यमस्तु विजयोऽस्तु रिपुक्षयोऽस्तु, चातुर्यमस्तु सततं हरिभक्तिरस्तु ।। १ ।।
।। श्रीरस्तु ।। ।। श्री कल्यायाणमस्तु ।।

This ms. was entered on ता० १ र. अ. सं० १०७५ A.H. in the collection of Mahārājā Jai Singh I. There is a seal of 1059 or 1069 A.H. in Persian which

bears the name of ऊधवदास, who was, perhaps, in charge of the manuscript-collection of the Mahārājā.

### 396. रम्भामञ्जरीनाटिका by नयचन्द्र

Colophon :

समाप्ता रम्भामञ्जरी नाम नाटिका ।। कृतिरियं संस्कृतकवित्वनलिनीवनदिनकरस्य प्राकृतकवित्वमालती-मधुकरस्य महाकवेः श्रीनयचन्द्रस्य ।। शुभं भवतु सर्वेषां पाठकानां श्रोतृणाञ्च ।।

माघः स्फूर्जन्निदाघः स कविरपि पविर्भारविः कालिदासः

प्रभ्रश्यद्वाग्विलासः समभवदतुलश्चञ्चलः सोक्तियुक्तौ ।

एको हर्षः प्रकर्षादवतरति सतां चेतसि वाक्सुधायाः

सान्द्रां चित्काव्यवीचीं रचयति रुचिरां श्रीनयेन्द्रे कवीन्द्रे ।।१।।

आसीज्जनः कृतघ्नः क्रियमाणघ्नस्ततसाम्प्रतं दृष्टः ।

इति मे मनसि वितर्को लोकः कथं भविता ।। २ ।।

संवत् १७५१ कार्तिकशुक्लद्वितीया बुधे लिखितेयं रम्भामञ्जरी इन्द्रप्रस्थे विश्रामसूनुना सदाशिवेनात्मपरोपकारकृते वा ।

चन्द्रभूतमुनिचन्द्रमितेऽब्दे कार्तिकेऽसितबुधद्वितीयायाम् ।

शक्रपत्तनवरे सुधी रम्भामञ्रीमलिखदत्र शिवाख्यः ।।

### 7639 (ज. 15). रसकल्पलता by मगनीराम s/o सूर्यमल्ल

Opening:

राधाचकोरायितदृङ्मृगाङ्कं त्रैलोक्यनाथाख्यमनन्त विक्रमं

संसाररोगस्य च पारदं विभुं नमाम्यहं श्री रसराजमद्भुतम् ।। १ ।।

सर्वगां सर्वगां दिव्यां सुधामां धामवर्जितां

सर्वदां सर्वदा वन्दे सारदां शारदामहम् ।। २ ।।

सूर्यमल्लात्मजेनाथ शङ्खभृद्दुर्गवासिना

मग्नीरामेण कविना रचितोऽयं सुसंग्रहः ।।३।।

पिता मे महाभाग्यवान् सत्यसंधः स्वहस्तार्जितार्थोऽतिदीनानुकम्पी ।

सदा राज्यपूज्यो सदाचारनिष्ठः कृतज्ञो गुणज्ञो विधिज्ञश्च विज्ञः ।। ४ ।।

ज्येष्ठभ्राता सतां शाता दाता ज्ञातेङ्गितस्य वै

अभवच्छुकदेवाख्यो गणितशास्त्रेषु भास्करः ।। ५ ।।

अस्त्यनुजस्तस्य महत्प्रतापवान् भूभृत्सभाभूषणसत्प्रतिज्ञः

ज्योतिर्विदां शेखरो मन्त्रवेत्ता कान्तः सुदान्तो बलदेवनामा ।। ६ ।।

रसग्रन्थैः समुत्पन्ना मग्नीरामेण वर्द्धिता ।
रसकल्पलता ह्येषा ददातु भिषजां सुखम् ।। ७ ।।

Colophon:

इति श्रीदधीचिवंशोत्पन्नसूर्यमल्लजेन मगनीरामेण विरचिता रसकल्पलता ।।

## 6. रसिकसर्वस्वभाण: by विनायक भट्ट

It is in the form of उत्तरार्द्ध of अनङ्गमङ्गलभाण

Closing :

इति श्रीकविनायकविनायकभट्टविरचितो रसिकसर्वस्वनाम भाणः ।। शुभमस्तु ।। संवत् सोरह
Aufrecht mentions अनङ्गमङ्गलभाण by सुन्दरकवि (C. C. I. p. 12). रसिकसर्वस्व is mentioned by him as an अलंकारग्रन्थ ( C. C. I, p. 497).

## 403. राघवपाण्डवीयकाव्यटीका by कविराज

Opening :

आसीत्संग्रामभीमः समसमरसमारम्भदुर्दम्भकुम्भ्या-
लम्भ्यावष्टम्भसम्भावितनिशितलसन्मण्डलाग्राग्रधारः ।
आशान्तक्षोणिपालावलिमुकुटमणीधोरणीधारणीय-
प्रोद्यत्पादारविन्दो हरचरणपरो **रत्नसिंहो महीन्द्र**: ।। १ ।।
एतस्मात् कीर्तिपूरस्फुरितसुधवलाम्भोजगर्भस्थलान्त-
भृंङ्गीभूतान्तरिक्षः समजनि जगतीनायको **रुद्रसिंहः** ।।
यस्मिन् दोःस्तम्भदम्भोदयमसकृदपाकुर्वति क्षमापतीनां
संग्रामक्षोणिरासीद् बहुगलदसृङ्भिर्निर्झरप्लावितैव ।। २ :।
ततो दुग्धाम्भोधेर्विधुरिव जगद्व्याप्तमहसः
समुत्पन्नः श्रीमानय**ममरसिंहः** क्षितिपतिः ।
करः खड्गे चेतो मुररिपुपदाम्भोजयुगले
द्विषन्मौलावङ्घ्रिः समसमरजयिनो यस्य नियतम् ।। ३ ।।
अशान्तभूमीशकिरीटकोटी–रत्नस्फुरत्पादसरोरुहस्य ।
अमुष्य भूमीवलयैकभानोरादेशमासाद्य महोदयस्य ।। ४ ।।
मिश्रश्रीभवनाथेभ्यो यथाधीतं तथा मया ।
विरच्यतेऽधुना टीका श्रीरामायणभारते ।। ५ ।।

The work is up to 29th verse of 1st canto only.

1478(1). राजरीतिनिरूपणशतकम् by दलपतिराय

This s'ataka is an appendix to the original work by the author captioned as 'पत्रप्रशस्तिः, यवनपरिपाट्यनुसारिणी' । It was composed at the instance of Mahārājā Sawai Mādho Singh I and his guru Goswami Vrajabhuṣaṇa of Kānkarolī.

Opening :

।। श्रीकृष्णाय नमः ।।

अभिसर सखि तूर्णं त्वत्प्रतीक्षाकुलोऽसौ
घनघनतिमिरेऽस्मिन् यामिनीमध्यभागे ।
तमसि हरिरहस्यस्त्वं च विद्युत्प्रकाशे-
ष्विति मुदितमनाभे राधिकामङ्गलाय ।। १ ।।
गिरिलयनगताम्भः सिक्तवासो विसारे
विवसनतनुयष्टिं वीक्ष्य कान्तं प्रपन्नम् ।
कृतकभयनिवेशाद् वेपमानोपविश्य
स्तनजधनपिधानव्याकुला राधिकाऽव्यात् ।। २ ।।

अथ प्रथमं यवनराज्याधिकारनियोगभृता यथाशक्त्याचरितनानाशास्त्रविशारदविबुधवृन्देन पित्रा ग्राहितगीर्वाणयावनशास्त्राभ्यासस्तदनु च हिन्दुम्लेच्छमहिपालपरिचर्यापारतन्त्र्येऽपि विद्याव्यसन-व्यग्रचेता बहुषु जनपदेषु विविधविद्वत्सपर्यापरिचयसंपादितशुद्धनागव्रजभाषाकाव्यरसालङ्काराद्यभिनिवेशः कथमपि पूर्वपुण्यप्राग्भारसंदर्शितफलोदयो निखिलराजन्यराजिनीराजिताङ्घ्रिराजीवश्रीमन्माधवे-न्द्राणां परिचारकपदमाप्तवानस्मि दलपतिराय : ।। तथा हि—

अध्यासितगुणो येषां श्रुतिवर्त्मानुगप्रभोः
ललल्लक्ष्म्या भवन्त्येव माधवेन्द्रचराः शराः ।।

सोऽहं श्रीमद्द्वारकेशसेवासफलितसर्वोत्तमदेहैर्भूरिभूपालभालचुम्बितचरणाम्भोजैर्गरिम-सौजन्यविद्याविज्ञानविवेकसत्कीर्तिसुधासिक्तवसुधामण्डलैः किं बहुना मदिष्टदेवायितमूर्तिभिर्गोस्वामि-श्रीव्रजभूषणशर्मभिर्यवनपरिपाट्यानुवृत्त्या गीर्वाणगिरि प्रशस्तिपूर्वकपत्रलेखनप्रकारायसमादिष्टो रचयामि सन्दर्भममुम् । याचे विदुषः सहृदयान् यदपात्रे मयि विद्याया लेशोऽपि चमत्कारीत्यव्यक्ते बालजल्पित इव तुष्टिमाधाय दुष्टामपि रचनां मैव दूषयन्तु किन्तूपगृह्णन्तु शोधनैः ।

**Opening of राजरीतिनिरूपणशतकम्**

गोपीवल्लभपादाब्जद्वन्द्वमाधाय चेतसि
वच्मि राजविधिं म्लेच्छपरिभाषानुकल्पितम् ।। १ ।।
क्वचिद्रूढेः क्वचित्कोशात् क्वचित्स्वानुभवात्पुनः ।
नामलक्षणसंस्थेयमधिकाराधिकारिणाम् ।। २ ।।

॥ श्री हज़ूर के अहल षि[ द ]मत कारषाने प्रगनाती औधादार के लक्षणम् ॥
॥ वकील ॥ मुतलक ॥ नायब ॥ मुसाहिब ॥

आज्ञा भवेद्यदायत्ता हस्तलेखश्च भूपतेः ।
जानीहि तं प्रतिनिधिं राज्यसर्वस्वधूर्वहम् ॥ ३ ॥

In this manner the duties of the office-holders and the names of the Kārkhānās are described. A list of the officers and Kārkhānās is given below. It is proposed to publish the text together with other works of this author separately.

॥ अहल षिदमत के नाम ॥

प्रतिनिधि—वकील, मुतलक,
नायब, मुसाहिब ।
अमात्य—वजीर, दीवान, प्रधान ।
सेनापति—बख्शी ।
शालापति—मीर सामान,
खानसामा, कोठारी ।
दूत—एलची, वकील ।
सुलेखक—मुन्शी ।
विज्ञापक—अरजवेगी ।
दानाध्यक्ष—सदर ।
महत्तर—नाज़िर ।
अनलाध्यक्ष—मीर आतिश,
तोपखाना का दारोग़ा ।
वास्तुक—मीर इमारत ।
जलाध्यक्ष—मीर बहर ।
स्थापनिक—तहवीलदार, मुकीम ।
आयतनिक—नजूल का दारोग़ा ।
उद्यानपाल—बागायत का दारोग़ा ।
शस्त्राध्यक्ष—कोरवेगी,
सिलहखाने का दारोग़ा ।
वैतंसिक—करावलबेगी,
शिकारखाने का दारोग़ा ।
विहंगाध्यज्ञ—कोशवेगी ।
निधिपाल या भाण्डागारी—खजाञ्ची,
भण्डारी ।
प्रवृत्तिवादुक—हरकारों का दारोग़ा ।
न्यायाध्यक्ष—अदालत का दारोग़ा ।
नगरगौप्तिक—कोटवाल ।
सीमागौप्तिक—फोज़दार ।
धर्माध्यक्ष—काजी ।
प्रवर्तक—मुफ़्ती ।
नीतिद्दश्वा—मुहतसिब ।
दुर्गपाल—किलादार ।
स्कंधयांत्रिक—मीर मंज़िल ।
पथकाराध्यक्ष—मीर तुजक ।
गणनायक—रिसालेदार ।
दण्डनायक—अमीर ठाकुर ।
तौलिक—वजनकष, सरबराहकार ।

॥ अथ कारखानों के नाम ॥

शय्यागार—सुखसेजखाना ।
मज्जनगृह—गुसलखाना, हम्माम ।
देवायतन—तसबीहखाना ।
पुस्तकालय—कुतुबखाना ।

चित्रागार—तसवीरखाना ।
भैषज्यगृह—ओषधिखाना,
दवाईखाना
फलागार—मेवाखाना ।
कोष्ठागार—जखीरा, अम्बार, काठार ।
महौषधिशाला—मोदीखाना ।
कुप्पशाला—रिकाबखाना ।
कांस्यागार—ठठेरखाना ।
महानस—बबर्चीखाना (रसौड़ा) ।
जलगृह—आबदारखाना, पाणेरा ।
तांबूलगृह—तंबोलखाना ।
प्रतिश्रय—बिलगोरखाना, लंगर ।
क्रयशाला—इबतियाखाना ।
सीवनागार—किरकिरायखाना ।
नेपथ्यागार—तौशकखाना, कपड़द्वारा ।
सुगन्धागार—खुशबोयखाना, सोंधखाना ।
वर्णागार—रंगखाना ।
कलादागृह—जरगरखाना ।
रत्नागार—जवाहरखाना, रत्नगृह ।
प्रहरणकोश—कोरखाना, सिलहखाना ।
संस्तरगृह—फर्राशखाना ।
श्रीगृह—खज़ाना ।
दानकोश—बेहला ।
मन्दुरा—अस्तबल, तबेला ।
गजशाला—फीलखाना ।
संदानिनी—गावखाना ।
उष्ट्रशाला—शुतरखाना ।
यानशाला—रथखाना ।
पालकागार—पालकीखाना ।
दारुकर्मालय—खातिमबंदखाना ।
दीपिकागार—शमअ, चिराग़खाना ।
ज्योतिरालय—मशालखाना ।
लेखशाला—दफ़्तरखाना ।
मृगयागार—शिकारखाना ।
शकुनिकालय—कोशखाना ।

It was in the light of the above that Sawai Madho Singh I organised the kārkhānās established by his father, Sawai Jai Singh.

The following definitions are interesting for the study of Mugal revenue administration:—

।। अथ देशविभागस्तदधिपाश्च कथ्यन्ते ।।

।। सूबा ।।

समुद्रगिरिपर्यन्तं चक्रं **चक्री** तदीश्वरः ।
महांस्तस्य विभागः स्याद्राष्ट्रं **जनपदञ्च** तत् ।। ८१ ।।

।। सिरकार ।।

चतुरङ्गचमूचञ्चद्राजधानीसमन्वितम् ।
राष्ट्रस्याप्यंशभूतं तन्**मण्डलं** मण्डलेशितुः ।। ८२ ।।

।। प्रगणा ।।

मण्डलांशस्तु **प्रगणं** बहुग्रामोपवेष्टितम् ।
तस्याधिपः स्वल्पबलो भवेत् सामन्तराडिति ।। ८३ ।।

॥ मौजे ॥ मादन ॥ वलदै ॥

कृषिक्षेत्रयुतं ग्राम (मौजे)माकरो लवणादिभूः ॥ (मादन) ।
वर्णैश्चतुर्भिर्नगरं शैलप्राकारवेष्टितम् ॥ ८४ ॥

॥ बंदर ॥

खेटं तु धूलिप्राकारं पुरमुद्वासिकर्बटम् ।
जलस्थलपथावाप्यं तद्द्रोणमुखमिष्यते ॥ ८५ ॥
परितः सार्द्धगव्यूतग्रामादिपरिवर्जितम् ।
**भडम्बं** कीर्त्यते सुज्ञैरगम्यं काननैर्घनैः ॥ ८६ ॥
बिचित्रं पण्यमागच्छेद्यत्र तत्**पत्तनं** मतम् ।
अध्वन्यहेतुनिर्माणं **सन्निवेशाख्य**मुच्यते ॥ ८७ ॥
चौर्यादिर्वसतिः **पल्ली** तापसानां किलाश्रमः ।
**निगमो** वणिजामेवं ब्रह्मवासो द्विजन्मनाम् ॥ ८८ ॥
क्षुद्रग्रामो भवेद्वासोऽ**शिका** द्वित्रिगृहं हि तत् ।
तृणाकीर्णोपान्तभूमि**र्गोकुलं** धेनुतृप्तिकृत् ॥ ८९ ॥
शिल्पिनः कर्मकाराश्च व्यापारिव्यवहारिणः । ॥ **दयार** ॥
चतुरङ्गबलो राजा यत्र तद्रङ्गमुच्यते ॥ ९० ॥
**चक्री** चक्राधिपः **सम्राड्राष्ट्रपालः** प्रकीर्तितः ।
**मण्डलेशो महाराजः सामन्तो** विषयाधिपः ॥ ९१ ॥
ग्रामाणि कतिचिद्यस्य वशेऽसौ **भौमिकः** स्मृतः ।
**ग्रामणिर्ग्राममुख्यः** (चौधरी) स्याद्रीतिज्ञो **देशपण्डितः** (कानूनगो) ॥ ९२ ॥

॥ मजमूअैदार ॥

राजवेतनदानांशान् ग्रामाप्ति दशवार्षिकीम् ।
लिखित्वा धारयेद्यस्तु **लेखसंग्राहको** मतः ॥ ९३ ॥

॥ अथ प्रगणाधिकारिणः ॥

॥ अमीन ॥

सम्पन्नां कृषिमालोक्य प्रजाया उचितां दशाम् ।
राज्यांशस्य विनिश्चेता कथितो **व्यवसायिकः** ॥ ९४ ॥

॥ करोड़ी ॥

तेन व्यवसितं द्रव्यमादद्याद्यः प्रजाजनात् ।
बलाद् सौकर्यतो वापि **करोदीरक** इष्यते ॥ ९५ ॥

॥ कोतल करोड़ी ॥

निरुद्धवेतनग्रामभोगमादाय भूपतौ ।
ससाक्षिकं प्रेषयेद्यो **निरोधकः** स इष्यते ॥ ९६ ॥

॥ पोतैदार ॥

राजद्रव्यं प्रजादत्तमाददीत परीक्ष्य यः ।
धनिको निक्षिपेत्पश्चात् कथितः **प्राप्तधारकः** ॥ ९७ ॥

॥ खजाञ्ची ॥

तेनोपकल्पितं द्रव्यं व्ययीकुर्याद्यथोचितम् ।
शेषं नृपे प्रहिणुयाद् **धनिकोऽसौ** प्रकीर्तितः ॥ ९८ ॥

॥ खजाना का दारोग़ा ॥ मुश्रिफ़ ॥ बखशी ॥

**धनाध्यक्षो** धनं रक्षेत् तल्लिखेद्धन**लेखकः** ।
प्रवर्तको भटानां तु **सेनानी** समुदीरितः ॥ ९९ ॥

॥ वाकयेनिगार ॥ खुफियैनवीस ॥

**प्रवृत्तिलेखको** वृत्तं लिखेद्ग्रामाधिकारिणाम् ।
छिद्रधर्माणि तेषां तु विलिखेद् **गुप्तलेखकः** ॥ १०० ॥

॥ सायर का दारोगा ॥ मुश्रिफ ॥ तहवीलदार ॥

**शुल्काध्यक्षो लेखकश्च धनिकोऽमी** त्रयो जनाः ।
शुल्काध्वकरमादद्याल्लिखेद्रक्षेत्पृथक् पृथक् ॥ १०१ ॥

॥ कोटवाल ॥ शहना ॥

चौरादेर्ग्रामगुप्त्यर्थं **ग्रामगौप्तिक** इष्यते ।
**कृषिगोप्ता** कृषेर्भोक्तॄन् वारयेत्कर्षकादिकान् ॥ १०२ ॥

॥ फौजदार ॥ काजी ॥

**सीमागौप्तिक** आरक्षेद् दीर्घां प्रगणभूमिकाम् ।
**धर्माध्यक्षस्तु** ग्रामात् तद्रव्यलेखादिसाक्षिकः ॥ १०३ ॥

॥ इतलाकनवीस ॥

राज्यांशग्रहणायुक्तभटलाभान् लिखेत्तु यः ।
**आदेशलेखकस्तेषां** वेतनेषु छिनत्ति यः ॥ १०४ ॥
इत्यादयोऽधिकाराःस्युः प्रायशश्चक्रवर्तिनाम्
सम्पत्तेरनुसारेण त्वन्येषां विद्धि भूभुजाम् ॥ १०५ ॥

एषा पद्धतिराख्याता राजरीतिबुभुत्सया ।
गभीराद्राजसेवाब्धेर्द्रोणपाकाच्च सिक्थवत् ।। १०६ ।।

Colophon :

इति यवनपरिपाट्यनुकृत्या राजरीतिनिरूपणं नाम शतकं विरचितं दलपतिरायेण समाप्तम् ।।
।। शुभं भवतु ।।

551. राधाविनोदकाव्यम् (सटीकं) by रामचन्द्र s/o जनार्दन, टीका by नारायण

f. 1. missing, opening on f. 2 a.

विधुसुहृद्विरहानलपीडिता विधुसुहृत्तरलानिलपीडिता ।
विधुसुहृद्वदनालिमपीडिता विधुसुहृत्सुगिरोऽकिरदीडिता ।। २ ।।

Opening ct.

कार्यार्थमुत्क्षिपति विधुसुहृदिति विधोःसुहृत्स्वरूपं वदनं यस्याः सा विधुसुहृद्वदना राधा आलीं सखीं प्रति विधोः सुहृदस्तद्वदुज्ज्वला शीतला शोभना या गिरा वाणी अकिरत् उच्चारयति स्म, कीदृशी ईडिता स्तुता पुनः कीदृशी अपीडिता न पीडिता यस्याः सकाशात् सापीडिता अतिपीडितेत्यर्थः उत्तमेऽनुत्तमं च स्यादितिवत्, पुनः विधुरिव सुहृत् विमलहृदयो नायकः श्रीकृष्णः तस्य विरहानलेन वियोगाऽग्निना विधुर्विष्णौ चन्द्रमसीत्यमरः, यद्वा विधुसुहृदः कन्दर्पस्य सम्बन्धी यो विरहानलः तेन पीडिता यद्वा विधुरेव श्रीवत्सलाञ्छनः एव सुहृत् तद्विरहानलेन पीडिता, विधुःश्रीवत्सलाञ्छन इत्यमरः, पुनः कीदृशः सुहृत्सहायो यस्य स तादृशः तेन तरलेन चञ्चलेन अनिलेन मलयानिलेन पीडिता विधुसुहृदा कामेन तरलेति पृथक्पदं वा ।। २ ।।

Closing on f. 8.

रामचन्द्रकविनादः पुरुषोत्तमसुतसुतेनेनेन ।
राधिकाहृदयशोकमासीद्राधिकाहृदयशोकमारात् ।। १९ ।।

Ct. रामचन्द्रेति ।। राधिकाया हृदयशोकं द्यति खण्डयति तत्तादृशं अदः काव्यं कविना पण्डितेन रामचन्द्रकविना आसीत् तेनोत्पादितमित्यर्थः कीदृशेन पुरुषोत्तमस्य यः सुतो जनार्दनः तस्य इनेन श्रेष्ठेन सुतेन ज्येष्ठपुत्रेण इत्यर्थः कीदृशमदः आरात् समीपे श्रुतमात्रमित्यर्थः राधिका-हृदये यस्य स तथा श्रीकृष्ण इति यावत् तस्य यः शोकः तदप्राप्तिनिबन्धनं यद्दुःखं तद् द्यति खण्डयति तादृशम् ।। १९ ।।

Colophon:

राधाविनोदकाव्यस्य व्याख्यानं स्वधिया व्यधात् ।
परोपकाररसिकाः शोधयन्तु तदादरात् ।।
इति राधाविनोदकाव्यटीका नारायणबुधविरचिता ।।

6370. रामचम्पूः by नारायण दीक्षित

Opening :

अभिनवबिसबुद्ध्या शैशवे शैलजायाः स्पृशति वदनभूषां चन्द्ररेखां करेण ।
कमलमिति पुनर्यस्तत्कराम्भोजयुग्मं स जयति मम विघ्नान् वारयन् वारणास्यः ।। १ ।।
लीलाविनिर्जितजगत्त्रयदानवाय वर्षीयसेऽपि शिशवे नियतं नवाय ।
सीताधवाय परपावनपावनाय तस्मै नमोऽस्तु हृन्मानवमानवाय ।। २ ।।
यस्याः साधुगुरोः कृपासमुदयादस्त्युद्भवः श्रावणे
यस्याः कोऽपि रसोद्गमस्तनुभृतां सन्तापनिर्वापकः ।
सैषा विष्णुपदावलम्बनपटुर्मत्काव्यकादम्बिनी
सद्यः सज्जनचित्तचातकचयोल्लासाय भूयादलम् ।। १२ ।।

Colophon :

इति श्रीदीक्षितसहदेवात्मजश्रीदीक्षितनारायणनिर्मितौ रामचन्द्रचरिते चित्रकूटाभिगमनं नाम प्रथम उच्छ्वासः ।। १ ।। (f. 4b.)

650. रामनाटकम् by सुन्दर मिश्र

It is same as अभिराममणिः at no. 65 (p. 344).

603. रामविलासकाव्यम् by विश्वनाथ चित्तपावन रानाडे

This poem is full of information about Sawai Jai Singh, his guru Ratnakar Pundrik Mahas'abde and the author Vishwanath Chittapavan of the Ranade faimly. It has remained unnoticed by scholars so far.

Opening :

।। श्रीगणेशाय नमः ।।

यच्छिष्यै रचिता जयन्ति जगति ग्रन्था हि ते यान् क्षणं
दृष्ट्वा मस्तकघूर्णनं वितनुते वागीश्वरोऽपि स्वयम् ।
तस्मै वैदिकतान्त्रिकाध्वरविदे श्रीढुण्ढिराजाय मे
विश्वस्मिन् स्थिरकीर्तयेऽस्ति गुरवे सद्बुद्धिदात्रे नमः ।। १ ।।[1]

Vishwanath praises his patron Sawai Jai Singh and explains the purpose of this composition :—

1. This verse occurs in शृङ्गारवापिका नाटिका as a benedictary s'loka. This नाटिका was composed by the same author विश्वनाथ under orders of Maharaja Ram Singh I for the entertainment of his grandson, Viṣṇu Singh and his associates. Ram Singh died in 1689 A.D. It must have, therefore, been written before this date and after the demise of Maharajkumar Kṛṣṇa Singh in 1682 A.D.

पूर्वं त्रेतायुगे यो दशरथसदने दीप्ततेजा अयोध्या-
पुर्यां देवो बभूव त्रिभुवनतिलको राक्षसानां निहन्ता ।
सोऽयं श्रीसूर्यवंशे यवनकुललयं कर्तुमाविर्बभूव
श्रीमानाम्बेरिनाम्न्यां पुरि जयवदनो नाम सिंहो नरेन्द्रः ॥ ८ ॥
अस्मिन् श्रीजयसिंहनाम्नि नृपतौ नित्यं कलावर्तिनः
श्रीरामस्य पराक्रमेण यशसा दानैश्च संशोभितम् ।
नानाजातिगजादिवर्णनयुतं श्रीविश्वनाथः कविः
काव्यं रामविलासनाम कुरुते राज्ञां सभारञ्जकम् ॥ ९ ॥
प्रीत्यर्थं रघुनायकस्य जगतां नाथस्य नानाविधा-
स्तास्ताः स्वाः कविताविलासरचना विद्वत्सु च ख्यापितुम् ।
श्लोकैः स्वैः कविविश्वनाथविदुषाऽऽरब्धा धियाशालिनां
ग्रन्थोऽयं विदुषां करोतु हृदये हर्षं गुणग्राहिणाम् ॥ १० ॥

Having described the genealogy of the Kachhvāhā rulers from Man Singh to Viṣṇu Singh the poet refers to Sawai Jai Singh's accession on the gaddi :—

तस्मिन् देवसमानचारुचरिते श्रीविष्णुसिंहे नृपे
गीर्वाणेन्द्रसहायतां सति गते तत्पुत्र उर्वीतले ।
राज्यं श्रीजयसिंह इत्यभिधया ख्यातोऽत्र लेभे स्वयं
धर्मज्ञैः सह पण्डितैः प्रतिदिनं न्यायान् समालोकयन् ॥ ३२ ॥

Sawai Jai Singh's conflict with emperor Bhahadur Shah :—

श्रीरत्नाकरदीक्षितोत्तमगुरुप्राप्तेष्टदेवार्चना-
सामर्थ्यात् पुनराप्तराज्यविभवः सोऽयं नृपो मानवान् ।
कृत्वा शाहबहादुरेण यवनाधीशेन सार्धं परं
पात्साहेन विरोधमत्र यवनान् हन्तुं प्रवृत्तोऽभवत् ॥ ३७ ॥

Here the phrase पुनराप्तराज्यविभवः is significant in that Sawai Jai Singh had regained the state of Amber by dint of his own prowess though emperor Bahadur Shah had put 'Khalsa' on his estate out of displeasure.

Important clans of the Kachhavāhās, who served Sawai Jai Singh, are enumerated in the following verse :—

राज्ञोऽग्रे खलु रावुरावलयुताः कुम्भाणिनाथावताः
खण्डेलाः सबलाः नरोकसहितास्ते मानसिंहावताः ।
खङ्गारान्वयजाश्च कुंतलकुलोत्पन्ना हि शेखावताः
राठोडैः सह मिश्रिता व्यरचयन् सङ्ग्राममेते भटाः ॥ ४७ ॥

The colophoic verse of the 1st canto :—

यो जात्या भुवि चित्तपावन इति ख्यातस्ततोपाख्यया
विख्यातः खलु रानडा इति जडाज्ञानापहानौ कृती ।
तस्य श्रीकविविश्वनाथविदुषो दोषोज्झितैषा कृतिः
कुर्याच्चेतसि सम्पदं बहुविधं संख्यावतां सम्प्रति ॥ ५१ ॥

इति श्रीचित्तपावनजातीयरानडचोपनामककविविश्वनाथपण्डितकृते श्रीरामविलासकाव्ये प्रथमः सर्गः ॥ १ ॥

There are 72 verses in the 2nd canto. It deals with the gifts and glory of the Māhārājā.

The third canto begins :—

स्थित्वा साँभरपत्तनेऽथ कतिचिद्राजा दिनानि द्विषां
देशानात्मवशान् विधाय बहुभिर्भूभर्तृभिः संगतः ।
आम्बेरीं सुरराजधामसदृशीं तां राजधानीं निजां
प्रत्यानन्दघनो जगाम हरिवत् सैन्यैः समस्तैर्वृतः ॥ १ ॥

Then follows the traditional description of Amber city. Ratnakar Pundarik performed वाजपेय यज्ञ in 1765 V.S. at the instance of Sawai Jai Singh. Here is a graphic and detailed account of the sacrifice :—

वेदव्याससधिया समानमतिना ब्रह्मश्रिया शालिना
श्रीरत्नाकरदीक्षितेन गुरुणा तं वाजपेयं मुखं [मखम्] ।
आम्बेर्यां पुरि देवराजनगरीतुल्यप्रभायामसौ
राजा कारयति स्म वेदविहिते धर्मे परं प्रीतिमान् ॥ ८ ॥
अथो विश्वभर्तुर्द्वितीये परार्द्धे, पदे वैष्णवे श्वेतवाराहकल्पे ।
मनोरन्तरे चारु वैवस्वतस्य, प्रपन्ने कलेरादिपादे युगस्य ॥ ९ ॥
जनानां परं प्रीतिदे पुण्यजम्बूयुते द्वीपवर्य्ये च खण्डे मनोज्ञे ।
शुभे भारते विन्ध्यनाम्नो हिमाद्रेः प्रशस्तान्तराले महापुण्यभूमौ ॥ १० ॥
सदा शान्तियुक्तेऽथ बौद्धावतारे, शके विक्रमार्कस्य राज्ञः पवित्रे ।
मनोहारके पञ्चषट्सप्तचन्द्रैः, शुभाङ्कैर्मिते हायने गच्छमाने ॥ ११ ॥
विलम्ब्याख्यसंवत्सरे[1] दक्षिणस्यां, दिशायां स्थिते भास्करे शैशराख्ये ।
ऋतौ माघमासे शुभे शुक्लपक्षे, तिथौ पूर्णिमायाञ्च शुक्रान्वितायाम् ॥ १२ ॥

---

1. बार्हस्पत्यमानेन विष्णुविंशतिकायां द्वादशे संवत्सरे ।

दिनर्क्षे तु पुष्ये सति प्रीतियोगे, कुलीराख्यराशौ[2] स्थिते यामिनीशे ।
रवौ पंक्तिराशौ[3] गते देवपूज्ये, तुलायां स्थिते चेति पञ्चाङ्गशुद्धचै ।। १३ ।।

Ratnkar Bhatta Pundarik and his genealogy :--

काश्यां धर्मपरायणो बुधवरः शाण्डिल्यगोत्रो महा-
शब्दोपाख्य इह प्रसिद्धविभवः श्रीदेवभट्टो द्विजः ।
मान्यः सर्वमहीभृतां विजयते श्रीरामसिंहार्चितो
वेदार्थस्य विचारकृत्प्रतिदिनं पुत्रादिभिः शोभितः ।। १४ ।।
यो वेदं समधीत्य शास्त्रधिषणां सम्पाद्य हेमार्जनं
कृत्वापञ्चमखान् करोति विधिवद् गङ्गातटे प्रीतिमान् ।
नित्यं श्रीमदुमारमारमणयोरर्चां च कुर्वन् समां
वेदव्यासपराशरादिवचसां तात्पर्यविज्ञानवान् ।। १५ ।।
पुत्रस्तस्य पुराणविद्दिनकरो ज्येष्ठो वरिष्ठो धिया
काश्यामुत्तरवाहिनीसवनकृन्नित्यं मनस्वी महान् ।
आस्ते पुत्रकलत्रमित्रसहितो विद्याधरो यत्सुतः
पूर्वः श्रीजयसिंहभूमिपतिना नाम्ना कुबेरः कृतः ।। १६ ।।
प्रभाकरो भास्करवत्प्रभावान्नाम्ना द्वितीयस्तनयस्तदीयः ।
मीमांसकोऽध्यापनकृत्कुटुम्बी करोति वासं मथुरानगर्याम् ।। १७ ।।
प्रातर्यो यमुनाजलान्तरगते विश्रान्तितीर्थे सदा
स्नात्वा भागवतं हि वाचयति तत्सार्थं विभोरग्रतः ।
सायं भारतमद्भुताद्भुतकथां यो वक्ति च प्रत्यहं
सर्वं पर्वणि पर्वणीक्षुरसवद्विद्वज्जनानां प्रियम् ।। १८ ।।
मीमांसाद्वयतर्कशास्त्रविलसद्वागापदेवः सुधीः
काश्यामास तदात्मजो बहुमतिः सौजन्यवारांनिधिः ।
श्रीनारायणदेव इत्यभिधया ख्यातो यदीयः सखा
संख्यावान् भुवि विद्यया विजयते मान्यो नृपाणां सदा ।। १९ ।।

(This verse is written on the margin)

पुत्रस्तस्यातिभव्यो विमलमतिरथो शास्त्रवेत्ता तृतीयो
ज्योतिष्टोमस्य कर्ता नृपतिगुरुरहो उज्जयिन्या नगर्या
आगत्याम्बेरिनाम्न्यां पुरि नृपवचनाद्वाजपेयं मखं यः
चक्रे रत्नाकरस्तत्क्रममिह सकलं वाक्यसूत्रैर्वदामः ।। १९ ।।

---

2. कर्कराशौ; 'स्यात् कुलीरः कर्कटक' इत्यमरः ।
3. दशमराशौ मकरराशौ । पंक्तिश्छंदोऽपि दशमं स्यादित्यमरः ।

तत्राद्येऽह्नि सूरिपूर्णसदने सङ्कल्पवाक्योत्तरं
विघ्ननां परिशान्तये गणपतिं सम्पूज्य गन्धादिभिः ।
पश्चादत्र मखे विधाय विधिवत्सोमप्रवाकार्चनं
चक्रे षोडशऋत्विगादिवरणं श्रीदेवभट्टात्मजः ॥ २० ॥
आसीद्भीमपुरो द्विजातिषु वरः **सोमप्रवाको** मखे
नाम्ना यो शिवराम इत्यभिहितः श्रेष्ठो महीमण्डले ।
अध्वर्युर्हरिकृष्ण [नाम] विबुधः कर्णाटकोऽभूद्द्विजः
श्रौतस्मार्तविधानदक्षधिषणो दान्तो दयावान् शुचिः ॥ २१ ॥
महाशब्दोपनामास्मिन् शिवरामो महाक्रतौ ।
बभूव वैदिको विप्रः **प्रस्थाता** प्रीतिपूर्वकः ॥ २२ ॥
**नेष्टा** द्रोणोपनामाऽत्र विश्वनाथोबभूव सः ।
यस्य बुद्धि समालोक्य संतुष्टाः सर्वपण्डिताः ॥ २३ ॥
आम्बेकरो जगन्नाथो वाजपेये महामखे ।
**उन्नेता** समभूत् प्राज्ञो वेदवेदाङ्गपारगः ॥ २४ ॥
आत्रेयो जयरामोऽत्र सप्ततन्त्रो द्विजोत्तमः
आसीद् **ब्रह्मा** विशुद्धात्मा वेदाभ्यासे कृतश्रमः ॥ २५ ॥
दशपुत्रोपनामास्मिन्नात्मारामो महामतिः ।
ब्राह्मणो **ब्राह्मणाच्छंसी** ऋत्विगासीन्महामखे ॥ २६ ॥
रामडोहकरश्चास्मिन्नलाभट्टेति वैदिकः ।
**आग्नीध्रनामा** संजातो निजकर्मणिदक्षिणः ॥ २७ ॥
गङ्गाराम इहाथ दीक्षित उरुप्रज्ञो मखे सुन्दरः
श्रीरत्नाकरदीक्षितस्य तनयः **पोता** पवित्रोऽभवत् ।
नप्ता श्रीयुतदेवभट्टविदुषो यः स्वल्पवर्षोऽपि सन्
वर्षीयानिव शुद्धकण्ठमपठन् मंत्रान् वरान् वैदिकान् ॥ २८ ॥
लट्टूपनामा यो विप्रो नाम्ना गिरिधरः सुधीः ।
**होता** स जज्ञे यज्ञेऽस्मिन् वाजपेये महाबलः ॥ २९ ॥
उपाख्यया च यो मुख्यो रामडोहकरो भुवि ।
स **मैत्रावरुणो** यागे सुन्दरोऽभून्महीसुरः ॥ ३० ॥
यः सौजन्यनिधिर्वार्ताकुशलो रम्यदर्शनः ।
स वीरेश्वरदेवोऽस्मिन्न**च्छवाको**ऽभवन्मखे ॥ ३१ ॥
पुत्रो यो भानुभट्टस्य पण्डितस्य मनोहरः ।
गोपीनाथोऽत्र संजातो **ग्रावस्तोता** विशारदः ३२ ॥

**उद्गाता** जयकृष्णोऽत्र त्रिवाडी गुर्जरोऽभवत् ।
सामगानेन यस्येन्द्रो मोदते त्रिदशैः सह ।। ३३ ।।
**प्रस्तोता** वाजपेयेऽस्मिन् जातः केशवपाठकः ।
शाखायां वाजसनेय्यां य विख्यातो वेदपारगः ।। ३४ ।।
सुब्रह्मण्यो जगन्नाथो गलेंडा सवनेऽभवत् ।
बहुश्रुतेषु चारुश्रीः प्रयोगेषु विशारदः ।। ३५ ।।
मीमांसको लोचितभूरिसूत्रो, यज्ञप्रियः कर्मणि सावधानः ।
**द्रष्टोपपूर्वः** खलु नागराजो, गदाधरोऽभूत् सवने बहुज्ञः ।। ३६ ।।
**चमसाध्वर्यवो** जाता विप्रा एकादश क्रतौ ।
शुचयो वेदसम्पन्नाः प्रसन्नाननशालिनः ।। ३७ ।।
कृत्वैवं वरणं महीसुमनसां पश्चाद्विधायार्चनां
वस्त्रालङ्कृति हेमहारसहितां तां दीक्षणीयां पुनः ।
दृष्टिं दृष्टिविनोदिनीं बहुफलां श्रीदेवभट्टाङ्गजो
निर्वर्त्याखिलपातकौघशमनीं जग्राहदीक्षां गुरोः ।। ३८ ।।

A description of the gifts made to the participants in the yajña follows upto vs.48.

श्रीरत्नाकरदीक्षितोत्तमगुरोर्यागे समागामिनां
दारिद्रयं जयसिंह एष विदुषां नीत्वा लयं प्रीतिमान् ।
पश्चाच्छ्रीजयमन्दिरोपरि निशि ज्योत्स्नासु योग्यासने
स्थित्वा श्रीकविविश्वनाथरचितान् श्लोकान् शृणोति स्म सः ।। ४९ ।।

The s'lokas in traditional praise of the Mahārājā continue upto 109. The 110th verse is colophonic यो जात्या etc.

There are 70 verses in the fourth canto. The poem closes as below:—

जगत्त्रितयपालिका सकलशत्रुसंहारिका
त्रिवर्गसुखदायिका निखिलयोगिनीनायिका ।
गुणप्रसववल्लिका द्युतिजितार्द्रहारिद्रिका
तुषारगिरिबालिका जयति पार्वती मातृका ।। ६८ ।।
सचामरकराध्विजा जलजयोनिजासेवितं
नमत्त्रिदशसुन्दरी–निटिललग्नपादप्रभम् ।
सुरद्रुमवनान्तरे मणिग्रहे शिवाङ्के स्थितम्
सदा वसतु मानसे गिरिपतेरपत्यं शुभम् ।। ६९ ।।

एवं श्रीजयसिंहनामनृपतिं संतोष्य पद्यैर्निजैः
श्रीरामस्य कलावतारमवनौ श्रीविश्वनाथः कविः ।
पूर्णायाथ समर्प्य काव्यसुकृतं तस्मै वरे पुष्करे
काव्यं कर्तुमगाद्द्वितीयमुचितं काश्यां शिवस्यालये ॥ ७० ॥

इति श्रीचित्तपावनजातीयरानड्योपनामककविविश्वनाथभट्टपण्डितविरचिते श्रीरामविलास-नामकाव्ये चतुर्थः सर्गः ॥ ४ ॥ सं० १७६६ चैत्र शुद्ध ६ रामनवम्यां सम्पूर्णम् ॥ सं० १७६६ श १६३१ कार्तिक कृष्णा २ । लि० तुलाराम भट्टजीश्रीविश्वनाथजीकस्याज्ञया ॥ श्रीरस्तु ॥

It appears from the above lines that this काव्य was completed on चैत्र शुक्ला ६ (रामनवमी), सं० १६६६ and was presented to Sawai Jai Singh at पुष्कर । This copy, dated कार्तिक कृष्णा २ सं० १७६६, is in the handwriting of तुलाराम, the favorite scribe of Sawai Jai Singh.

Having submitted रामविलास काव्य to Sawai Jai Singh the poet proceeded to Kās'ı in order to compose another poem dedicated to s'iva. It is, perhaps, शम्भुविलास, a copy of which exists in the India Office Library, London.

(I.O. Mss. Catalogue, VII (1904); No. 3850; 1148 C.)

The opening verse of शम्भुविलास runs as under :—

श्रीषट्केन समन्वितं प्रथमतो नत्वा गुरुं बुद्धिदं
विघ्नध्वंसपरायणं च हृदये ध्यात्वा गणाधीश्वरम् ।
नानालङ्कृतिरीतिजातिमहितं श्रीविश्वनाथः कविः
काश्यां शम्भुविलासनाम कुरुते संख्यावतां प्रीतये ॥ १ ॥

It also transpires from verse 14 of the 3rd canto that the poet had become disgusted with this world and so he resorted to Kās'ı, the abode of all pleasures.

भुक्त्वा वैषयिकं सुखं कविरसौ संजातबोधस्ततो
दृश्यं स्थावरजङ्गमात्मकमिदं ज्ञात्वा प्रपञ्चंमृषा ।
सर्वानन्दगृहं परात्परतरं श्रीराजराजेश्वरी-
रूपं ब्रह्म हृदि स्मरन् शिववने काश्यां स्थितिर्निर्ममे ॥ १४ ॥

Vishwanath Kavi had come in contact with Maharaja Ram Singh long before and composed शृङ्गारवापिका under his orders in 1736 V.S. The poet continued during the time of Viṣṇu Singh and then Sawai Jai Singh up to 1766 V.S. (1719 A.D.).

### 168. रामसिंहकीर्तिचन्द्रोदयः by नीलकण्ठ

Opening :

ॐ नमः सरस्वतीरूपाय गुरवे सद्गुरवे ।।

ॐ शारदां वरदां वाणीं भवानीं भवतापहाम् ।
नत्वा श्रीरामसिंहस्य कुर्वे कीर्तिविधूदयम् ।। १ ।।
श्रीसूर्यवंशोद्भवमानसिंह प्रभोः सुतश्छत्रधरः प्रभूतः ।
जगज्जयी जाडचहर प्रसिद्धः, पृथ्वीपतीन्द्रो जयसिंहनामा ।। २ ।।
यस्याद्य शुभ्रं शरदिन्दुवद्यशः, प्रकाशयत्येव जगद्यशोनिधेः ।
येनेह दत्ता पृथ्वीशताक्षणान्, नौरङ्गसाहेः पुरुहूततेजसा ।। ३ ।।
तस्यात्मजोऽयं जयतादिदानीं, श्रीरामसिंहो रणवीरसिंहः ।
समस्तविद्वज्जनजाडचहर्ता, कर्ता प्रकाशस्य रिपुप्रहर्ता ।। ४ ।।

It is to be noted that the poet omits भावसिंह, who preceeded जयसिंह।

Closing :

श्रीमत्काश्मीरदेशे निवसति विबुधः सोमरत्नाकराख्यः
श्रीकण्ठः सूनुरस्य प्रकटितयशसो रामसिंहस्य राज्ञः ।
पूर्णद्वचर्षेन्दुवर्षे नभसि रचितवान् पूर्णिमायां प्रपूर्णं
दीनः क्षीणत्वहीनं दरतिमिरहरं कीर्तिचन्द्रोदयं यः ।। ३५ ।।

Colophon :

इति रामकीर्तिचन्द्रोदये तृतीय उल्लासः ।। समाप्तमिदम् ।। कीर्तीचन्द्रोदयनाम निबन्धः ।।

This poem was composed in praise of Ram Singh, when he was still a Maharajkumar in 1720 V.S.

### 165. रामसिंहीयवृत्तमयूखमाला by यज्ञेश्वर दीक्षित

Opening :

श्रियञ्च विद्याञ्च यशस्व[श्च]सुश्री, विद्यात्मिका विश्वविमोहिनी सा ।
जपारुणाभा घुसृणाङ्गरागा, श्रीरामसिंहस्य ददातु देवी ।।१।।

........ ........ ........ ........

अभ्येति तातश्वशुरोपदेष्टृ-गुरुत्रयेद्धः श्रियमादधानः ।
बसुन्धरावल्लभभावधन्यः श्रीरामसिंहो मगणस्य केलिः ।।७।।

Closing :

इति श्रीभारद्वाजकुलजलधिपूर्णचन्द्रेण कृष्णरायमहाराजमहास्थानमण्डपसमासीन-व्यासरायनामकमाध्वमस्करिवादिकेसरिविजयलब्धसमस्ततदीयबिरुदस्य पित्रा सह सभास्तारसमुदीर्ण-

सदद्वैतविद्याचार्यपदवीपात्रभूतस्य तोषाप्यध्वरिशेखरस्य प्रपौत्रेण पूर्वतनपाठोपन्याससमयपितामह-कृताक्षेपसमुचितसमाधानतोषिततातचरणकारितपारितोषकमहाध्वरस्य श्रीरामचन्द्रदीक्षितस्य पौत्रेणास्मदन्वयाभरणाप्पय्यदीक्षिततिलकवरनन्दननीलकण्ठमखिशेखरनिर्वर्तितसोमयागस्य तोषप्यादीक्षितस्य द्वितीयपुत्रेण आयिअम्बापरनामसावित्रीगर्भशुक्तिमुक्ताफलेन श्रीरामचन्द्रदीक्षित-सहजतोपदेशोभयलब्धसर्वतन्त्रस्वातन्त्र्यसर्वस्वेन यज्ञेश्वरदीक्षितेन विरचिता श्रीरामसिंहवृत्तमयूखमाला समाप्ता ।। श्रीः ।। संवत् १७२० ।।

This work also came into existence when Ram Singh was a Mahārāja-kumāra.

### 6343. रामोज्ज्वलमधुरं स्तोत्रम् by श्रीकृष्णभट्ट कविकलानिधि

Opening :

यः क्षीरसागरतटे सकलैः सुरौघैः, पोलस्त्यदुःखदलितैः स्तुतिभिर्गृहीतः ।
व्योमा गिरा गदितवानवनौ जनिष्ये, तं श्रीपतिं दशरथस्य सुतं नमामि ।। १ ।।

Closing :

यः केलिकौतुकरसानुभवाय काय-व्यूहं विधाय रमते पशुपः वधूभिः ।
देवद्विषो द्यति परं परयेव तन्वा, स्वेच्छाविलासभवनः स पुनातु रामः ।। ४० ।।

Colophon :

इति श्री कृष्णाख्य श्रीरामचन्द्रचरणारविन्दैकतानकविविरचितं श्रीरामोज्ज्वल-मधुरस्तोत्रं समाप्तिमगात् ।।

### 628. रुक्मिणीमाधवनाटकम् by कृष्णदत्त भट्ट

Opening:—

।। श्रीगणेशायनमः ।।

कन्दर्पैकप्रभवनिलयः सर्वलोकैकसेव्यो
मेघश्यामावयवरुचिरः शर्मवृक्षस्य मूलम् ।
शृङ्गाराख्यो रस इव जयत्यात्तमूर्तिः प्रकामं
तारुण्यातिप्रचलदबलाचित्तहारी मुरारिः ।।१।।
अपि च–
शीतांशोः किरणावभासिततले वृन्दावने संचरन्
मेघश्यामतनुस्तडिद्रुचिधरं वासो वहन्नंसयोः ।
प्रत्येकं व्रजगोपिकाः स्मरकथालापैरथानन्दयन्
श्रेयांस्येष तनोतु वो विरचयन् वंशीरवं माधवः

नान्द्यन्ते सूत्रधारः (नेपथ्याभिमुखमवलोक्य)–आर्ये! इतस्तावदागम्यताम् ।

नटी (प्रविश्य)–एषाऽस्मि । आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति ।

सूत्रधारः–आर्ये ! आकर्णाकृष्टकोदण्डमण्डलसन्ततवर्षच्छरनिकरजर्जरीकृतारिवृन्दसुन्दरीजनगीत-कीर्तिनिखिलधरामण्डलाखण्डलसभामलङ्कुर्वाणोऽयमध्यास्ते सिंहासनं माधवेन्द्रः, य इदानीं–

विकोशखड्गाग्ररुचा समेधिते, स्फुरत्तपार्कातपसन्निभे नृपः ।
प्रसह्य कीर्तिरपकृष्य विद्विषां, जुहोति तेजोमयकृष्णवर्त्मनि ।।३।।

नटी–आर्यपुत्र ! एतादृश एव महानुभावस्त्रिलोकीप्रसिद्धविभवः खलु माधवेन्द्रः यस्य च-

कीर्तिःसत्कविराजराजिरसनायानाधिरूढा गता
शैलग्रामवनान्तपत्तनपुराण्युल्लङ्घ्य पारेम्बुधिम् ।
तेजः श्रुत्युपकण्ठकष्टकठिनस्फूर्जद्धनुः संभवं
दग्धुं विद्रुतवैरिवृन्दमसकृद्ध्वन्यान्तरालेष्वपि ।।४।।

आर्यपुत्र ! केन प्रयोगाभिनयेन महाराजं माधवेन्द्रं प्रसादयितुमुद्यतोऽसि ?

सूत्रधारः–आर्ये ! संस्कृतमेवाश्रित्य कृष्णदत्तनिर्मितेन नवेन नाटकेन उपस्थाय, तदादिश्यन्तां रङ्ग-समारम्भणकुशलाः कुशीलवाः ।

नटी (सविस्मयं)–आर्यपुत्र ! जिह्वाग्र जाग्रदखिलश्रुतिशास्त्रतत्त्व–विचारणाप्रणयिभिः श्रीमद्भिर्हरि-दत्तभट्टैर्गुरुभिः समुपदिष्ट विविधयजनादिधर्मक्रियोपसेवनसमाहितस्य महाराजस्य कथं शृङ्गारप्रधा–ननाटकावलोकनकौतुकमिति, अपिच–

विजित्य शत्रूनुपलभ्य च श्रियं, निरीक्ष्य कार्याणि पुराधिवासिनाम् ।
श्रुतिप्रयोगैर्यजतो दिवौकसः, कथं तदन्ये विषये प्रवृत्तयः ।। ५ ।।

सूत्रधारः–आर्ये ! भवती सम्यगविज्ञातनृपकर्तव्यासि, यतः खलु निखिलविषयरसभुजो राजानः, तथा च–

सम्यक् पूर्वजनुः समर्जिततपः संसिद्धिलब्धश्रियो
मातङ्गाश्वरथालिपत्तिपृतनात्रस्यत्समस्तद्विषः ।
लीलासञ्चलदङ्गनाप्रविलसद्भूषाक्वणन्मन्दिरा
राजानो न शुचिप्रियाः प्रियतमे क्वाप्तं त्वयैतद्वचः ।। ६ ।।

यत्स्वात्मारामोऽपि भगवान् भुवमवतीर्य
लौकिकान् विषयान् भुनक्तीति पश्य तावत् ।
द्रष्टुं रङ्गप्रवृत्तिं त्वत्कल्पितां नूनमुत्सुकः
सभान्तर्माधवेन्द्रोऽयं रुक्मिणीमिव माधवः ।। ७ ।।

**Closing :**

कृष्णः—प्रिये ! किं ते परमपि प्रियं करोमि ?
रुक्मिणी—आर्यपुत्र ! अतः परं किमपरं मे प्रियं यतः –
नृपाः प्रहसिता लोकैश्चैद्यप्रभृतयो जिताः ।
बद्धस्तलम्भितेवाहमानायि प्रसभं त्वया ।। १०५ ।।

तथाप्येतदस्तु–

महीभृतां प्रकृतिहिते द्विजन्मनां, मखक्रियास्वमरपतेः सुवर्षणे ।

तपस्यतामभिमतसंप्रयच्छने, निरन्तरं मयि च तवास्तु सौहृदम् ।। १०६ ।।

श्रीकृष्णः –एवमस्तु ।

इति निष्क्रान्ताः सर्वे ।

(पञ्चमोऽङ्कः)

Colophon:

इति श्रीकृष्णदत्तविरचितं रुक्मिणीमाधवनामनाटकं सम्पूर्णम् ।। शुभमस्तु ।। संवत् १८२२ तत्र वैशाखशुक्लपञ्चम्यां लिखितं गुरौ कृष्णदत्तेनैव ।। शुभं भूयात् ।।

7331. रूपमञ्जरी by रामसिंह, महाराजकुमार

Opening :

गणेशाय नमस्कृत्य शब्दव्युत्पत्तिहेतवे ।

रामसिंहकुमारेण क्रियते पददीपिका ।। १ ।।

5372–73. रेखागणितम् by जगन्नाथ सम्राट्

Opening:

गणाधिपं सुरार्चितं समस्तकामदं नृणाम् ।

प्रशस्तभूतिभूषितं स्मरामि विघ्नवारणम् ।। १ ।।

लक्ष्मीनृसिंहचरणाम्बुरुहं सुरेशैर्वन्द्यं समस्तजनसेवितरेणुगन्धम् ।

वाग्देवतां निखिलमोहतमोपहन्त्रीं, वन्दे गुरुं गणितशास्त्रविशारदञ्च ।। २ ।।

श्रीगोविन्दसमाह्वयादिविबुधान् वृन्दाटवीनिर्गतान्

यस्तत्रैव निराकुलं शुचिमनोभावः स्वभक्तचानयत् ।

म्लेच्छान् मानसमुन्नतान् स्वतरसा निर्जित्य भूमण्डले

जीयाच्छ्रीजयसिंहदेवनृपतिः श्रीराजराजेश्वरः ।। ३ ।।

करं जनार्दनं नाम दूरीकृत्य स्वतेजसा ।

भ्राजते दुस्सहोऽरीणां यथा ग्रैष्मो दिवाकरः ।। ४ ।।

येनेष्टं वाजपेयाद्यैर्महादानानि षोडश ।

दत्ताश्च द्विजवर्येभ्यो गोग्रामगजवाजिनः ।। ५ ।।

तस्य श्रीजयसिंहस्य तुष्ट्यै रचयति स्फुटम् ।

द्विजः सम्राड्जगन्नाथो रेखागणितमुत्तमम् ।। ६ ।।

अपूर्वं विहितं शास्त्रं यत्र कोणावबोधनात् ।

क्षेत्रेषु जायते सम्यक् व्युत्पत्तिर्गणिते तथा ।। ७ ।।

Closing :

श्रीमद्राजाधिराजप्रभुवरजयसिंहस्य तुष्टयै द्विजेन्द्रः
श्रीमत्सम्राड् जगन्नाथ इति समभिधा रूढितेन प्रणीते ।
ग्रन्थेऽस्मिन्नाम्नि रेखागणित इति सुकोणावबोधप्रदा–
तर्यध्यायोऽध्येतृमोहापहृदिह विरतिं घस्रसंख्यो गतोऽभूत् ।। ८ ।।
शिल्पशास्त्रमिदं प्रोक्तं ब्रह्मणा विश्वकर्मणे ।
पारम्पर्यवशादेतत् आगतं धरणीतले ।। १ ।।
तदुच्छिन्नं महाराजजयसिंहाज्ञया पुनः ।
प्रकाशितं मया सन्यक् गणकानन्दहेतवे ।। २ ।।

Colophon :

संवत् १७८५ शके १६५० वैशाखशुक्लपूर्णिमायां समाप्तम् ।।

## 44. लघुकाव्यटीका (मेघाभ्युदयकाव्यटीका) by लक्ष्मीनिवास

Opening :

करतलगतमुक्ताफलसदृशं पश्यन्ति सकलमपि भुवनम् ।
यस्याः प्रसादवशतः सा जयतु सरस्वती देवी ।। १ ।।
भद्रंकरं सेवकसत्तमस्य यशस्करं पूर्वगुरुक्रमस्य ।
भद्राय रत्नप्रभसूरिराजं प्राज्यप्रभावं प्रणतः प्रणौमि ।। २ ।।
अथ सूत्रम् ।।
काचित्काले प्रमुदितनदन्नीलकण्ठे घनागे
व्योमाटव्यां प्रतिदिशमलं सञ्चरन्मेघनागे ।
बद्धारम्भं वदति वनिता स्म प्रवासाय कान्तं
कामश्चापं वहति हि तदा विस्फुरत्सायकान्तम् ।।१।।
गमनिका ।। व्याख्या ।।

काचित् अनिर्दिष्टनाम्नी वनिता कान्तं पतिं वदति स्म बभाषे, स्मेनातीते परोक्षेऽत्र स्म-शब्दयोगाद् वर्तमानकालेऽपि अतीतकालः । किंविशिष्टं तं,काले वर्षासमये प्रवासाय देशान्तरगमनाय बद्धारम्भं कृतोद्यमं, कामो मन्मथस्तदा तस्मिन्नेव समये हि स्फुटं निश्चितं चापं धनुर्वहति दधाति, किंविशिष्टं चापं विस्फुरत्सायकान्तं विस्फुरन्तो द्योतमानाः सायकानां बाणानां अन्ता यत्र तत्, किं-विशिष्टे काले, प्रमुदितनदन्नीलकण्ठे उपलक्षिते प्रमुदिताः हर्षिताः नदन्तः शब्दायमानाः ये नीलकण्ठाः मयूरास्तैः शोभिते । पुनः किं० काले, घनागे घना एव प्रस्तुतत्वात् श्यामलत्वाच्च अगाः पर्वताः यस्मिन्. पुनरपि किंविशिष्टे काले व्योमाटव्यां आकाशारण्ये प्रतिदिशं सर्वत्रैवालं अत्यर्थं सञ्चरन्तश्च चलमाना मेघवत् नागाः गजाः यत्र स तस्मिन् ।

Closing :

अकार्षीत् स इदं काव्यं केलिः सज्जनयोगतः ।
श्लाघ्यतां यस्य सत्काव्यकेलिः सज्जनयो गतः ।।
व्याख्या :

सुप्रसिद्धः केलिनामा कविरिदमेतत्काव्यं अकार्षीदकरोत्, स कः यस्य केलिकवेः सत्काव्यकेलिर्मनोऽन्यकवित्वक्रीडाश्लाघ्यतां वर्णनयोग्यतां गतः प्राप्तः, तस्मात् सज्जनयोगतः तत् साधुसम्बन्धतः, किंविशिष्टः केलि सज्जनयः सत् शोभनो नयो न्यायो यस्यासौ, सज्जः प्रगुणो वा नयो न्यायो यस्य स सज्जनयः ।

भूपव्रातनिषेव्यमानचरणो विद्यावतामादिमो
यं रत्नाकरसूरिरेष कृपया शास्त्राणि चाध्यापयत् ।
श्रीरत्नप्रभसूरिशिष्यतिलको लक्ष्मीनिवासाभिधः
सोऽयं केलिकवेः कृतौ रचितवान् हर्षप्रकर्षादिति ।।१।।

Colophon :

इति मेघाभ्युदयमहाकाव्यस्य श्रीमल्लक्ष्मीनिवासकृता मुग्धावबोधनाम्नी टीका समाप्ता ।

The ms. contains six stanzas devoted to श्रीकृष्ण also by other anthors.

### 7280. लघुरघुकाव्यम् by सीताराम पर्वणीकर

Opening :

वन्देऽहं जगतामाद्यौ पितरौ शिरसान्वहम् ।
यदीयचरणाम्भोजस्मृतिरंहोविद्योतिनी ।।१।।
रघुवंशादिकाव्येषु महत्सु लघुबुद्धयः ।
न शक्नुवन्ति ते तदहं कुर्वे लघुरघुं किल ।।२।।
आद्यो महीभुजामासीद् वैवस्वतमनुर्नृपः ।
ओंकार इव वेदानां मान्यः सकलभूभुजाम् ।।३।।

The first canto cantains 25 verses while the second remains incomplete at 21st only.

### 553. वाग्भटालङ्कारवृत्तिः by ज्ञानप्रमोदगणि

Opening :

श्रीमद्वाचकधुर्यानल्पधियां रत्नधीरसुगुरूणां ।
टीका मया प्रसादाद्विहिता ग्रन्थानुसारेण ।।१।।
संवद्विक्रमनृपतो विधुवसुशशिभिरङ्कितवर्षे । (१६८१)

प्रा ×२×शि×२× ×२×मसाहे×२×
ज्ञानप्रमोदवाचकगणिभिरियं विरचिता वृत्तिः ।
राज्यश्रिसाम्राज्ये स्थिते प्रशस्तभूपस्य श्रीगजसिंहमहीपेलवरे नामनि शुभस्थाने ॥

Many portions have been erased by pigments.

पुस्तकमिदं श्रीविहारीणाम् ॥

478. वाणीभूषणम् by दामोदर पण्डित ।

Opening :

राजत्कुञ्जरराजकृत्तिविमलोदञ्चद्दुकूलावृतं
भ्राजद्भोगिफणामणिप्रविलसन्मुक्तामणिग्रामणीः ।
पादाम्भोजभुजङ्गफूत्कृतिरणन्मञ्जीरमञ्जुद्युति
श्रेयो वः शिवशैलराजसुतयोर्देयारभिन्नं वपुः ॥१॥

.... .... .... ....

दीर्घदोषकुलोद्भूतदामोदर इति श्रुतः ।
छन्दसां लक्षणं तेन सोदाहरणमुच्यते ॥४॥

Closing :

मात्रावृत्तमिह प्रोक्तं चत्वारिंशच्छाताधिकम् । (१४०)
त्रयोदशाधिकं शतं वर्णवृत्तमिहोदितम् ॥ (११३)

Colophon :

इति श्रीदामोदरविरचितं वाणीभूषणं समाप्तिमगादिदम् ।
कविजनाह्लादकारकं श्रोतृमनोहारकञ्चैतत् ॥

265. वासवदत्ताख्यायिकाचूर्णिका by प्रभाकरभट्ट

Opening :

निन्दास्तुतिपरत्वेन वीरशृङ्गारयोर्द्वयोः ।
व्याख्यास्ये चूर्णिकाः काश्चित्सुबन्धोर्दूतयवर्णिकाः ॥

Colophon :

इति श्रीमीमांसकवर्यभट्टमाधवसुतप्रभाकरकृतं वासवदत्तायां दूतीसंवादो आख्यायिकाविवरणं समाप्तम् ॥छ॥छ॥छ॥

संवत् १६६८ समये आषाढ बदि पञ्चमी शनिवासरे लिखितमिदं पुस्तकं श्रीकृष्णार्पणमस्तु ॥

### 518. वासवदत्ताख्यायिकाटीका by जगद्धर

Opening :

हरौ तातवैकुण्ठताकाम्यसिद्धौ हरे तातकामप्रणाशोऽस्ति बुद्धौ ।
अतस्तौ विहाय त्वदीयाङ्घ्रिमीडे त्वया तेन हेरम्ब नोदासितव्यम् ।।१।।
नत्वा गुरून् गुणगुरूनवलोक्यटीका विश्वादिकोशनिवहं सुविचार्य बुद्धचा ।
श्रीमान् जगद्धर इमां वितनोति टीकां ग्रन्थानुबोधनिपुणां भरतादिविज्ञः ।।२।।

Closing :

शाके युग्मयुगेपुभूपरिमितेऽब्दे रौद्रसंज्ञे तथा (१५४४)
मासे फाल्गुनसंज्ञके विधुतिथौ वारे तथा भास्करे ।
नक्षत्रे शततारकाभिधवरे योगे········लीलिखद्
भानाजी विबुधस्सुबन्धुकवितादीकां सुब्रघ्ने पुरे ।।

### 653. विक्रमोर्वशीयत्रोटकटीका by रङ्गनाथ s/o बालकृष्ण

Opening :

गण्डसिन्दूरमार्तण्डखण्डिताद्यतमश्च यः
शुण्डोत्क्षिप्तारिवृन्दोऽसौ रक्षताद् गणनायकः ।।१।।
श्रीवालकृष्णपितरं विद्वद्वृन्दशिरोमणिं
नत्वा नारायणाख्यं च पितृव्यं विबुधोत्तमम् ।।६।।
श्रीकालिदासरचितत्रोटकस्य यथामति ।
रङ्गानाथाख्यविदुषा व्याख्या विख्यापयिष्यते ।।७।।

Closing :

श्रीश्रिवेकरवंशभूषणमणिः श्रीतानभट्टात्मजः
श्रीमद्दीक्षितरङ्गनाथविबुधो धीरो धराविश्रुतः ।
श्रीनारायणबालकृष्णकृतिनौ जज्ञे तनूजौ स्फुरद्-
विद्वद्वादिकरीन्द्रकुम्भसरणीसञ्चारिपञ्चाननौ ।।१।।
सर्वतन्त्रस्वतन्त्रश्रीबालकृष्णतनूद्गतौ
श्रीवेणीमाधवबुधरङ्गनाथाभिधौ सुतौ ।।२।।
कृतेयं विक्रमोर्वश्या रङ्गनाथमनीषिणा
प्रकाशिका काशिकादिपत्तनेषु प्रकाशताम् ।।३।।
नयनधरणिभूभृद्भू मितेऽब्दे नभस्येऽसितदल इव नागानां तिथावर्कवारे ।
सुरभिषगधिदैवतेऽपि भे वृद्धियोगेऽकृत कृतमतिरेतं रङ्गनाथः प्रपूर्णम् ।।४।।

Colophon :

इतिश्रीमद्याजूकप्रवरश्रिवेकररङ्गनाथदीक्षितकुक्षिजीवन्धुवृन्दपुरन्दरश्रीबालकृष्णभट्टाङ्गोद्भूत-रङ्गनाथविरचितायां विक्रमोर्वशीयप्रकाशिकायां पञ्चमाङ्कोन्मेषः ।। समाप्तश्चायं ग्रन्थः ।। श्रीगणेशः प्रीणातु ।।

श्रीम्वेकरोपनामश्रीरङ्गनाथतनूजनेः

श्रीबालकृष्णविदुषो जगज्जानातु पुस्तकम् ।।

## 4092. विचारसुधार्णवः by जयकृष्णभट्ट

Opening :

कुलानन्दात्मजः श्रीमान् देवकान्तिजयः सुधीः ।
जयपूर्वकृष्णदास इमं ग्रन्थं विनिर्ममे ।। १ ।।
वैद्यवंशसमुद्भूतः शक्त्यधिगोत्रसम्भवः ।
जन्मभूस्तस्य विख्याता गोरणेति महीतले ।।२।।
माधवेत्यभिधा तस्य पुरासीत् पितृसम्मता ।
जयकृष्णदास नाम प्रसादाच्छ्रीगुरोरभूत् ।।३।।
सृष्टेर्गतिप्रबोधाय यस्येच्छा वर्तते परम् ।
सत्यानृतस्य बोधार्थं यस्येच्छा परिजायते ।।४।।

Colophon :

इति श्रीकृष्णचन्द्रचरणारविन्दमकरन्दलुब्धमधुव्रतश्रीजयकृष्णदासग्रथिते विचारसुधार्णवे कर्माधिकारनिरूपणो नाम षोडश विचारः ।। शकाब्दश्रीविक्रमादित्यमहाराजस्य १५४१ चैत्रस्य एकादश्यां वासरे वृहस्पतिवारे श्रीदौलयात्रासमये से० भूमिवासिनो [नः] सद्वैद्यश्रीजगन्नाथदाससेनस्य लिखितम् ।। मेरट्टवासी सत्कायस्थकुलसम्भवमहोदारचरितपरमभागवतरायरायांराय-श्रीयुत सुन्दरदास-पाठार्थं ।।

## 7518. विद्यानन्दव्याकरणम्

Colophon :

इति विद्यानन्दवृत्ति प्रथितद्विपदकरणं समाप्तम् । संवत् १४४१ वर्षे वैशाख बदि प्रतिपदि तिथौ हरिवासरे । होडकलंबशलग्रामे (?) राण श्री यशोवर्मसुत श्री गजवर्मणि राज्ये कुर्वति सति श्री सोडज्ञातीय मुंज समरतनूजाना— मध्ये ·······मेदपाटज्ञातीय पंडित······· विद्यानंदाभिधा दिकं चतुर्वृत्तवृत्तिर्लिखिता ।

495. विद्वन्मोदतरङ्गिणी by रामदेव (चिरञ्जीवाभट्टाचार्य)

The pedigree of the author is as below :—

राघवेन्द्र was known as भट्टाचार्य शतावधान p/o भवानन्द सिद्धान्तवागीश. He was the author of (1) मन्त्रार्थदीपिका and (2) कालतत्त्वार्णवसेतु। रामदेव (चिरञ्जीवभट्टाचार्य) was his son.

विचार्य तारणं चक्रं पिता मे करुणापरः
मन्नाम रामदेव इति कृतवान् नामकर्मणि ।
नाम्नैव संबोध्य जनः कथायां यदेतमाकारयिता तदाशीः
ततोऽग्रजो मामतिवत्सलत्वात् चिरं चिरञ्जीवतया जुहाव ॥
द्वैताद्वैतमतादिनिर्णयविधिः प्रोद्बुद्धबुद्धिः श्रुतो
भट्टाचार्य शतावधान इति यो गौडान्द्भवोऽभूत्कविः।
विद्वन्मोदतरङ्गिणी ननु चिरंजीवेन तज्जन्मना
शास्त्रे यो रचितोचितः प्रथमकस्तस्या तरंगो गतः ॥

389. विनोदकथासंग्रहः by राजशेखर

Opening :

यन्नैकामपि कामिनीं परिणयस्याभ्यर्थमानोऽप्यलं
तन्नूनं गृहभारकातरतया मुक्तोद्यमो देवरः ।
मा शङ्कस्व हरिस्त्रिखण्डविजयी भ्रातास्ति ते सर्वदो
भामाद्याभिरितीरिते स्मितमुखो नेमिर्वशी पातुवः ॥१॥
जयन्ति गुरवोऽस्माकं विद्यावल्लीमहीरुहाः ।
मलधारिगणाधीशाः श्रीश्रीतिलकसूरयः ॥२॥
मनोविनोदहेतूनां सभार्हाणां यथाश्रुतम् ।
मया कथानां ह्रस्वानां क्रियते संग्रहो बुधाः ॥३॥
तन्नास्ति किञ्चिज्जगति यद्वाच्यं न यथासभम् ।
अतो विनोदकथितसंग्रहोऽयं न निष्फलः ॥४॥
तत्त्वप्रियजनाकीर्णे षड्दर्शनसमाकुले ।
आस्थाने निर्विरोधास्तु कथनीयाः कथानकाः ॥५॥

सद्वाक्यनादपक्षाभ्यां भुवनत्रयधारिणी ।
देवी सरस्वती हंसी रमतां मम मानसे ।।६।।
योऽपि सोऽपि ध्रुवं ग्राह्यो नियमः पुण्यकांक्षिणा ।
सोऽल्पोऽप्यनल्पलाभाय कमलश्रेष्ठिनो यथा ।।७।।

अस्तिश्रीभारभासुरं श्रीपुरं नाम नगरं तत्र द्वादशव्रतधरो धीरो न्यायार्जितधनो महाजनवल्लभः परमसम्यक्दृष्टिः षडावश्यकक्रियाशाली श्रीपतिश्रेष्ठी ।।

Closing :

इति मोदककथा ।।८२।। इतिश्रीमलधारिगच्छनायकश्रीराजशेखरसूरिविरचिता हास्यकथा सम्पूर्णा ।।

Prof. H. D. Velanakar mentions अन्तरकथासंग्रह (विनोदकथासंग्रह) in जिनरत्नकोश and M. D. Desai in his जैन साहित्यनों संक्षिप्त इतिहास calls it as अन्तरकथासंग्रह or कौतुककथासंग्रह ।

### 335. विश्वलोचनकोशमुक्तावली by श्रीधरसेन

Opening :

जयति भगवानास्तां धर्मः प्रसीदतु भारती
वहतु जगती प्रेमोद्गारं वरञ्च शुभं जनाः ।
अयमपि मम श्रेयान् गम्यस्तनोतु मनो मुदं
किमधिकमितस्त्यक्तावेगा भवतु विपश्चितः ।।१।।
सेनान्वये सकलसत्त्वसमर्पितश्रीः, श्रीमानजायत कविर्मुनिसेननामा ।
आन्वीक्षिकी सकलशास्त्रमयी च विद्या, यस्यास वादपदवीव दवीयसीव ।।२।।
तस्मादभूदखिलवाङ्मयपारदृश्वा विश्वासपात्रमवनीतलनायकानाम् ।
श्रीश्रीधरः सकलसत्कविगुम्फतत्त्व-पीयूषपानकृतनिर्जरभारतीकः ।।३।।
तस्यातिशायिनि कवेः पथि जागरूक-धीलोचनस्य गुरुशासनलोचनस्य ।
नानाकवीन्द्ररचितानभिधानकोशानाकृष्य लोचनमितायमदीपि कोशः ।।४।।
साहित्यकर्मकवितागमजागरूकैरालोकितः पदविदाञ्च पुरो निवासी ।
वर्त्मन्यधीत्य मिलितः प्रतिभान्वितानां चेदस्ति दुर्जनवचोरहितं तदानीम् ।।५।।
यत्नो मयायमनपायमशेषविद्या विद्याधरीपरिवृढस्य मतौ नियोक्तुम् ।
त्यक्त्वा पुनर्विमलकौस्तुभरत्नमन्योर्लक्ष्मीविनोदरसिको रसिकोऽस्तिधन्यः ।।६।।
नागेन्द्रसंग्रथितकोशसमुद्रमध्ये नानाकवीन्द्रमुखसूक्तिसमुद्भवेयम् ।
विद्वद्गृहादमर[वाङ्मय]पट्टसूत्रे मुक्तावली विरचिता हृदि सन्निधातुम् ।।७।।
वीतरागस्य सुरभेर्यशः कुसुमशालिनः
श्रितोऽस्मि चरणस्थानं यः पुनांगत्वमागतः ।।८।।

Colophon :

इति पण्डितश्रीश्रीधरसेनविरचितायां विश्वलोचनमित्यपराभिधानायां मुक्तावल्यां नानार्थ-काण्डः ।।

187. वृत्तचन्द्रोदयः (वृत्तरत्नाकरटीका) by भास्करराज s/o गम्भीरराज दीक्षित

The author introduces himself :—

विश्वामित्रवंश्यः शिवभजनपरो भारतीसोमपीथी
काश्यां गम्भीरराजो बुधमणिरभवद्भास्करस्तस्य सूनुः ।
मार्ग्यां साधारणेऽब्दे द्विशरनयशके वृत्तचन्द्रोदयाख्यां
व्याख्यां मुख्यामकार्षीदभिनववपुषो वृत्तरत्नाकरस्य ।।

For further details see 'Catalogue of Manuscripts in the Mahārājā of Jaipur Muselem' page 95.

212. वृत्तमुक्तावली or रत्नावली by श्रीकृष्ण भट्ट कविकलानिधि ।

This work has been published by the Rajasthan Oriental Research Institute, Jodhpur (1963 A.D.) under the editorship of Bhatta Shri Mathuranath Shastri, a direct descendant of the author. The edition is based on two fragmentary manuscripts available at the Bhandarkar Oriental Research Institute, Poona, nos. 487 (1899–1915) and 551 (1884–87). Unfortunately the copy in this collection is also incomplete but it cantains a fourth गुम्फ in addition to the three गुम्फs already published This गुम्फ deals with प्रस्तार etc. It begins on f. 50a –

।। श्रीमहागणपतये नमः ।।

अथ छान्दसिकजनपरीक्षणार्थं प्रस्तारादिक्रमेण निरूप्यते, तत्र मात्रावृत्ते द्विकलमारभ्य प्रस्तारः ।।

Closing on f. 52 b.

इति वृत्तमुक्तावल्यां प्रस्तारादिनिरूपणो नाम चतुर्थो गुम्फः ।। समाप्तश्चायं ग्रन्थः ।।

Colophon :

संवत् १७६४ वर्षे आश्विन सुदि १४ लिखितमिदं पुस्तकं पुरुषोत्तमेन गोकुलस्थेन ।।

166. वृन्दावनकाव्यम् by मालाङ्क (मानाङ्क) कवि

Opening :

वरदाय नमो हरये पतति जनो यं स्मरन्नपि मोहरये ।
बहुशश्चक्रं दहता मनसि दितिर्येन चक्रं दहता ।।१।।

स्वमिव भुजङ्गविशेषं व्युपधाय यः स्वपिति भुजङ्गविशेषम् ।
नवपल्लवसमकरया श्रियोर्मिपङ्क्त्या च सेवितः समकरया ।।२।।

Closing :

इत्याह पीतवाससमायतनेत्रस्तं कंसासुरात् पशुमतामायतने त्रस्तम् ।
हसितानां विमलतया सहलीलाजानां छायं प्रकिरन्दशनैः सह लीलाजानाम् ।।५१।।

Colophon :

इति श्रीमालाङ्ककविविरचितं वृन्दावनकाव्यं समाप्तम् ।। संवत् १६८८ वर्षे आषाढमासे शुक्लपक्षे तृतीयायां बुधवारे लेखकपाठकयोः शुभमस्तु ।।

47. **वृन्दावनकाव्यटीका** by **लक्ष्मीनिवास** p/o **रत्नप्रभ** ।

Opening :

दुष्करं हि तपस्तप्त्वा जिता रागादयो भटाः ।
येन तस्मै नमस्यामो भुवनाख्यातकीर्तये ।।१।।
सत्कीर्त्या हि समाश्रितः सुविदिततत्त्वस्तपस्तेजसा ।
दुष्कर्मद्विपपाटने मृगपतिः वाचां पटिष्ठः सुधीः ।।२।।
श्रीजैनेन्द्रमताभ्रदीपनदिवानाथो गुणग्रामणीः ।
श्रीरत्नप्रभसूरिराट् दिशतु मे प्रज्ञाप्रकर्षं मुदा ।।३।।
काव्यकर्तुः क्व काव्यानि क्व मे बुद्धिरपाटवा ।
तदेतद्दीपमात्रेण भुवनानां प्रकाशनम् ।।४।।
तथापि टीकां कुर्वाणो नोपालभ्यो विचक्षणैः ।
जल्पन् शिशुर्यथादोषं नोपालभ्यो भवेज्जनैः ।।५।।
करोमि लघुकाव्येषु टीकां सौष्ठवशालिनीम् ।
श्रीमल्लक्ष्मीनिवासोऽहं नाम्ना शिष्यहितैषिणीम् ।।६।।

Closing :

श्रीवृद्धगच्छाम्बुधिपूर्णचन्द्रो रत्नप्रभः सूरिवरो विभाति ।
तदन्तिषद्योऽस्ति रमानिवासोऽकरोत् स टीकां तृतीयेऽत्र काव्ये ।।१।।

Colophon :

इति श्रीवृन्दावनमहाकाव्यस्य मुग्धावबोधनाम्नी टीका श्रीमल्लक्ष्मीनिवासकृता समाप्ता ।। संवत् १५६५ वर्षे मार्गसिरशुक्लपक्षे.......श्यांतिथौ परिपूर्णीकृतामिति ।। श्री विक्रमपुरवरे ।। (बीकानेर)

### 512. वृन्दावनेश्वरीवन्दनपद्यानि

Opening :

वृन्दावनेश्वरिवयोगुणरूपलीलां सौभाग्यकेलिकरुणाजलधेऽवधेहि ।
दासीभवानि सुखयानि सदा सकान्तां त्वामालिभिः परिवृतामिदमेव याचे ॥१॥

Closing :

अत्यद्भुतं मलयजद्रवसेकतत्या वृद्धिं जगाम यदिदं विरहानलौजः ।
कर्पूरकेलिचटकावलिसाधनानि ज्वालैव शान्ति..........दिति ब्रुवानि ॥७५॥

### 6571. वैष्णवाचारविधिः by नृसिंह

Opening :

वन्दे लक्ष्मीनृसिंहं प्रणतजनमनोऽम्भोजभानुं दयाब्धिम् ।
क्षीराब्धिं द्वीपदेहामृतधवललसच्छेषभोगोपविष्टम् ॥
जुष्टं भास्वत्किरीटामलशशिकलया योगपट्टे निविष्टं
ब्रह्मब्रह्मेन्द्ररुद्राद्यमरमुनिवरध्यानसंज्ञानभाग्यम् ॥ १ ॥
आलोच्य शास्त्राणि ऋषिप्रणीतानन्यांनि चाचार्यकृतानि सम्यक् ।
सारं समाकृष्य विलिख्यतेऽत्र श्रीवैष्णवाचारविधिः क्रमेण ॥ ६ ॥

### 27. व्रजनिधिकीर्तिरत्नमाला by शम्भुराम मिश्र

Opening :

सत्यं ज्ञानमनन्तमाद्यममलं चिद्रूपमानन्दकं
सत्तामात्रमनीहमक्षरमजं कूटस्थमेकं परम् ।
ज्योतिर्ब्रह्मसनातनं च विगुणं तत्त्वं यदेवात्र तत्
वन्देऽहं व्रजनन्दनं व्रजनिधिं गोपालचूडामणिम् ॥ १ ॥

Such benedictary verses with the refrain 'वन्देऽहं व्रजनन्दनं व्रजनिधिं गोपाल-चूडामणिम्' continue upto no. 51 followed by other verses upto 57.

एषा वै व्रजनिधिकीर्तिरत्नमाला संप्रोता द्विजवरशम्भुमिश्रकेण ।
भूषायै व्रजनिधिसंज्ञिनो गलस्य भक्तानामपि किल तस्य भूषणाय ॥ ५८ ॥
एषा मया व्रजनिधेः खलु कीर्तिरत्नमाला विरच्य च समर्प्य तदीयकण्ठे ।
संप्रेषिता नृपवराय प्रतापसिंहनाम्ने प्रसादपरिभावनयास्य विष्णोः ॥ ५९ ॥
विष्णोः कण्ठविराजमानरत्नमालैषा शुभरूपदास्तु वो नः ।
यां बिभ्रन्मनुजः स्वकीयकण्ठे स्याद्देवेन्द्रमनोहरस्वरूपः ॥ ६० ॥
मालिका व्रजनिधेर्विशालिका गुणगणस्य कलिका ।
कालिकाऽघमहिषस्य पालिकाभिमदनस्य तेऽस्तु सा ॥ ६१ ॥

एतां सद्व्रजनिधिकीर्तिरत्नमालां ये सन्तः पुनरीहतोऽपि धारयन्तु ।
नो चिन्त्यं शुभमतिभिः परं नृपाय दत्तेयं नहि न हि नस्त्वयेति विप्राः ।। ६२ ।।

Colophon :

इति श्रीमन्नारायणचरणनलिनद्विरेफश्रीनिवासाचार्यशिष्येण शम्भुराममिश्रेण विरचिता व्रजनिधि-कीर्तिमाला समाप्तिमगात् ।। शुभमस्तु सर्वेषां ।।
संवत्सरे खशरहस्तिशशाङ्कसंख्ये (१८५०)
शाके शरैकहयभूमिमितेऽश्विनीशे । (१७१५)
मासे सिते च नवमी रविवासरेऽसौ
संदर्भिता गुणनिका पुरि माधवस्य ।।
लिखितं जादुरामेण विप्रेण ।। शुभं भूयात् ।।

### 7324. शब्दकौमुदी by स. माधोसिंह (प्र०)

Opening :

नत्वा श्रीमाधवं श्रीमान् माधवः पृथ्वीपतिः ।
संगृह्य कुरुते लोकहितार्थां शब्दकौमुदीम् ।। १ ।।

Closing :

राजाधिराजैरिह माधवाभिधैः प्रकाशिता संप्रति शब्दकौमुदी ।
अधीत्य यामाशु भजेत मानवो गीर्वाणभाषाविषयं धियं मुदा ।।

Colophon :

इति श्रीमहाराजाधिराजश्रीमाधवसिंहदेवविरचिता शब्दकौमुदी पूर्तिमगात् ।।

### 7333. शब्दशोभाव्याकरणम् by नीलकण्ठ

Opening :

।। जयति जयन्तीपतिर्जगति ।।
सानन्दं शतशो नत्वा शिवयोश्चरणद्वयम् ।
शब्दशोभां वयं कुर्मः शिशुव्युत्पत्तिसम्पदे ।। १ ।।

Closing :

यद्यपि खलबहुलोर्वी न वृथा क्लेशस्तदप्येषः ।
तुष्यतु तदेव तेजो विलसति यस्य प्रसादोऽयम् ।। १ ।।
शुक्लजनार्दनपुत्रो बच्छाचार्यस्य दौहित्रः ।
अभ्यस्तशब्दशास्त्रो भट्टोजिदीक्षितछात्रः ।। २ ।।
हीराभिधपातिव्रतमहसि प्राप्तनिजजन्मा ।
कविनीलकण्ठशर्मा निर्मितिमेनां विनिर्ममे शैव : ।। ३ ।।

त्रिनवषडेकमितेऽब्देऽतिक्रान्ते विक्रमादित्यात् । (१६६३ वि.)
शुचिदर्शे शिवपदयोः निजकृति········द्यापि नीलकण्ठेन ।। ४ ।।

Colophon:

इति नीलकण्ठकविकल्पिता शब्दशोभा शिवार्पणमस्तु ।। व्यास ।। शुभमस्तु ।। संवत् १७०० वर्षे चैत्र सुदि ४ सोमे लिखितमिदं पुस्तकम् ।।

## 458. शिवकोशः (स्वोपज्ञटीकासहितः) by शिवदत्त शर्मा

Opening:

वन्दामहे भारति तं भवत्याः कृपाकटाक्षं करुणापरायाः
यतो जगद्व्यस्तसमस्तवस्तु स्वहस्तविन्यस्तमिवावभाति ।। १ ।।
शब्दार्णवाजयामरवोपालितसिंहमेदिनीविश्वान्
हारावलीहलायुधशाश्वतहैमत्रिकाण्डशेषांश्च ।। २ ।।
प्रीत्यै विविच्य भिषजो विविधौषधानामासंदिहानस्य
नानार्थौषधकोशो विरच्यते लिङ्गभेदेन ।। ३ ।।

Opening (ct )

मदकलितकपोलमञ्जुगुञ्जन्मधुकरनिक्वणदत्तकर्णतालः
रदवलयितविघ्नचण्डशुण्डः कलयतु मङ्गलमङ्गजो भवान्याः ।। १ ।।
स जयति देवः सोमः शिरसा प्रबिभर्ति यं शिवः सोमः ।
अनवरतं विपुलसुधां किरन् करैरवति यो वसुधाम् ।।२।।
विविच्य वाग्भटग्रन्थान् टीकां कोशांश्च भूरिशः ।
शिवदत्तः स्वकोशस्य व्याख्यामाख्यातुमीहते ।।३।।

Closing :

प्रचुरप्रयोगवित्ता (?) ये शब्दास्त इह कीर्तित्ताः प्रायः ।
दृष्टा अप्युत्पलिनीषु प्रभृतिषु चान्ये परित्यक्ताः ।।
नवग्रहतितिषाप्ते हायने हालभूभुजः ।
चक्रे चातुर्भुजिः कोषं शिवदत्तः शिवाभिधम् ।।

इति श्रीकर्पूरीयशिवदत्तकृतः शिवकोशः सम्पूर्णः ।। शुभं भवतु ।।

ct. ग्रन्थकृदात्मानं ख्यापयति ।। नवग्रहेति० हायनो स्त्री शरत्समा इत्यमरः । हालः शालिवाहनपार्थिवः ।।

हाला सुरायामिति हैमः ।। चातुर्भुजिः । अन् इञ् ।
पूर्वापराम्नायकृतां वचोभिः शिवप्रकाशो रचितो यतोऽस्मिन्
विधीयतां दोषविधौ समाधिर्ग्रन्थे न दोषः क्व नरप्रणीते ।।१।।

सततपरहितैकमानसानां विमलधियां गुणिनाममत्सराणाम् ।
विलसतु हृदये चिकित्सकानामिति शिवदत्तकृतः शिवप्रकाशः ।।२।।
इति श्रीकर्पूरीयचतुर्भुजात्मजमिश्रशिवदत्तकृतः शिवप्रकाशः पूर्णः ।।
।। श्रीः ।। छः ।।

Aufrecht says, he wrote in 1677. A.D.

14. **शिवतत्त्वम्** by **गणेश** p/o **नृसिंहाश्रम**

Colophon at the end of प्रथमप्रकरण

इति श्रीपुण्यस्तम्भनिवासिगणेशविरचितं साम्बसदाशिवाराधनसहितं भक्तिनिरूपणप्रकरणं शिवतत्त्वबोधग्रन्थस्थं समाप्तम् ।।

6099. **शिवादित्यमणिदीपिका (अप्पय्यदीक्षितकृतब्रह्ममीमांसाभाष्यटीका)** by **श्रीकण्ठ आचार्य**

Opening :

यस्याहु रागमदपूरितपूर्णशक्तेरंशे कियत्यपि निविष्टममुं प्रपञ्चम् ।
तस्मै तमालरुचिभासुरकन्दराय नारायणीसहचराय नमः शिवाय ।।१।।
आकर्णकृष्टधनुराहितमोहनास्त्रमारान्निरीक्ष्य मदनं कुपितश्च किञ्चित् ।
शम्भोः समाधिसमये विकसत्कृशानुज्वालाकलापजटिलं निटिलं स्मरामि ।।२।।

6683. **शिवार्चनचन्द्रिका** by **श्रीनिवासभट्ट** s/o **श्रीनिकेतन**

The author–

आसीदशेषगुणरत्ननिधिः पृथिव्यां श्रीश्रीनिकेतन इति प्रथितोऽध्वरीन्द्रः ।।१०।।
तत्सूनुः श्रीनिवासः सकलनिगमवित्सर्वशास्त्रार्थवेत्ता
श्रौतस्मार्तेषु कर्मस्वतिशयनिपुणः सत्कविः स्वीयदेशात् ।
पीठं जालन्धराख्यं प्रकटितविभवं प्राप्तयात्राप्रसंगात्
तत्र श्रीसुन्दराख्यं सकलगुणनिधिं प्राप्य सद्देशिकेन्द्रम् ।।११।।
तत्पादपङ्कजयुगं परिचर्य तस्मात् प्राप्याभिषेकमखिलागममप्यधीत्य ।
तस्याज्ञया समधिगम्य पुरीं स काशीं तत्राकरोत् वसतिमात्मविदां वरिष्ठः ।।१२।।
तत्र स्थितः सकलतंत्ररहस्यवेत्ता शिष्यैः शिवार्चनपरैः श्रितशैवदीक्षैः
अभ्यर्थितो वितनुते सकलागमार्थसारोदयां भुवि शिवार्चनचन्द्रिकां सः ।।१३।।

Closing :

चत्वारोऽत्र मया ग्रन्था: कृता ह्यागमदर्शने ।
निदेशाद्देशिकेन्द्रस्य सम्प्रदायप्रवृत्तये ।।

तत्रापि पारिजाताख्यो भैरवार्चापदादिकः ।
अन्यो रत्नाकराख्यः स्यात् श्रीसौभाग्यपदादिकः ।।
तृतीयः कल्पवल्ल्याख्यः सपर्याक्रमपूर्वकः ।
चतुर्थस्याभिधानं तु श्रीशिवार्चनचन्द्रिका ।।
तेष्वाद्ये भैरवार्चोक्ता श्रीविद्यार्चा द्वितीयके ।
तृतीये सप्तशत्याख्ये मालामंत्रा नवार्णयोः ।।
विधिर्विरचितः सम्यक् सपर्यायाः सविस्तरः ।
पञ्चायतनमन्त्राणां चतुर्थे विस्तरः कृतः ।।
संसारसागरं घोरं तर्तुमिच्छन्ति ये नराः ।
अभ्यर्च्य देवतास्तेषां पोता एते मया कृताः ।।
एतेष्वेकं समारुह्य तल्लोकद्वीपमेत्य च ।
तत्र भुक्त्वाखिलान् भोगान् मुक्तिरत्नमवाप्नुयात् ।।
सुन्दराचार्यशिष्येण श्रीनिवासेन धीमता ।
षट्चत्वारिंशदगमत् प्रणीतायां प्रकाशकः ।।

### 2. शृङ्गाररत्नमाला by शिव

Opening :

अतिविपुलं कुंचयुगलं रहसि करैरामृषन् मुहुर्लक्ष्म्याः ।
तदपहृतं निजहृदयं जयति हरिर्मृगयमाण इव ।।१।।

Closing :

नानाकवीन्द्रकृतबन्धविलोकनाप्तसद्वर्णवृत्तरचना शिवगुम्फितेयम् ।
कण्ठे विलासमधिगच्छतु नागराणां यूनां चिरं रसविदां शुचिरत्नमाला ।।१०१।।

Colophon :

इति शृङ्गाररत्नमाला सम्पूर्णा ।। शुभं भवतु ।।
रदभूपे विक्रमाब्द ऊर्जशुक्ला रसे कुजे
शृङ्गाररत्नमालेयं लेखकेनालिखापयत् ।। चिरञ्जीव इति ।।

### 7649. शैवसुधाकरः by सदानन्द स्वामी

Opening :

।। श्रीगणेशाय नमः ।।

ॐ तत्सत् सुखचित्तनुर्मतिगिरां यो नास्पदं मायया
जीवेशादिविभेदभाक् खपवनाग्न्यब्भूमिकल्लीलया ।
स्वेषां स्थूलतमां स वीक्ष्य तु मतिं लोकेऽवतीर्णः प्रभुः
लिङ्गात्मा करुणार्द्रधीर्विजयतां श्रीसाम्बमूर्तिः शिवः ।।१।।

क्षोणीमण्डलमण्डने धनवतां प्रज्ञावतां सौख्यदे
चण्डद्विङ्मदखण्डने जयपुरे दण्ड्यान् मुहुर्दण्डयन् ।
नीत्या सम्प्रति पालयन् विनयिनः पाखण्डनिःखण्डयन्
अस्ति श्रीनृपरामसिंहसुमतिः सत्पण्डितान् मण्डयन् ॥२॥

........ ........ ........ ........

तज्ज्ञात्वा शिवपादपङ्कजरजः श्रीमान् सुरूपो नृपः
श्रीमच्छाङ्कररामसिंहनृपतेः प्रीत्यै प्रमाणैर्युतः ।
कार्यः संग्रह इत्यवोचदथ तत्तुष्टच्यै यथाबुद्धचयं
श्रीमच्छैवसुधाकरो मतिमतां ल्हादाय संतन्यते ॥५॥

Closing :

रसेन्दुनन्दभूवर्षे विक्रमादित्यभूपतेः । (१९१६)
पूर्णोऽयं कार्तिके शुक्ले त्रयोदश्यां सुसंग्रहः ॥

Colophon :

इति श्रीमन्महीमहेन्द्रमहाराणा-श्रीस्वरूपसिंहप्रेरितश्रीमत्परमहंसपरिव्राजकाचार्य-श्रीसदानन्दस्वामिविरचिते श्रीमच्छैवसुधाकरे पञ्चविंशः किरणः । समाप्तश्च शैवसुधाकरः ॥ संवत् १९१७ भाद्रपदमासे कृष्णपक्षे द्वादश्यां लिखितं ब्राह्मणदशोराज्ञातीयकोटेश्वरेण, उदयपुरमध्ये ।

## 7246. श्रीक्रमचन्द्रिका by रामभट्ट

Opening :

अखण्डानन्दबोधाय नित्याय परमात्मने ।
चित्संक्रान्तस्वरूपाय कृष्णाय गुरवे नमः ॥१॥
ज्ञात्वा तन्त्राण्यनेकानि सरहस्यान्यशेषतः ।
प्रवक्ष्येऽहं समासेन रामः श्रीक्रमचन्द्रिकाम् ॥२॥

Colophon :

इति श्रीमद्देशिकमण्डलीमुकुटमाणिक्यकान्तिमञ्जरीविराजितचरणपल्लवेन कृष्णभट्टान्तेवासिना सभारञ्जकोपनाम्ना रामभट्टेन विरचितायां श्रीक्रमचन्द्रिकायां चतुर्थः परिच्छेदः समाप्तः ॥

## 7193. श्रीविद्याविधानम्

Opening :

उदितदिवाकरदेहां पुरहरवामाङ्गकृतगेहां
परिपूर्णितभक्तेहां सस्नेहां शैलजां वन्दे ॥

### 464. श्रुतबोधः by कालिदास

Post-colophonic :

इति श्रीमत्कालिदासकृतौ छन्दसि शास्त्रके ।
श्रुतबोधाख्यनामासौ ग्रन्थः सम्पूर्णतामियात् ।।४०।।
वस्वृष्यद्रीन्दुवर्षस्य कृष्णे भाद्रे स्मरे तिथौ । (१७७८)
सम्राजां पुस्तकमदोऽलिखत् पोलसदाशिवः ।।४१।।
वाजपेयादियष्टॄणां जगन्नाथमनीषिणाम् ।
सम्राडित्युपनाम्नां च जगज्जानातु पुस्तकम् ।।४२।।

### 615. षोडशशृङ्गारकाव्यम् by केशवदास

आदौ मज्जनचीरहारतिलकं नेत्राञ्जनं दर्पणं
नानाभूषणमङ्गरागघटनं केशावलीगुम्फनम् ।
ताम्बूलं स्मितभाषणं चतुरता रक्ताक्तपादौ तथा
पातिव्रत्यविलासहंसगमनं शृङ्गारकाः षोडश ।।१।।

भाषानुवाद :

प्रथम सकल शुचि मज्जन अमलवास जावक सुदेश केशपाश को सुधारिबौ ।
अंगराग भूषण विविध मुखवासरागकज्जलकलित लोल लोचन निहारिबौ ।।
बोलनि हंसनि चित चातुरी चलनि चारु पल पल पातिव्रत प्रतिपारिबौ ।
केशोदास बिलास करहु कुंवरि राधे इहिं विधि सोरह सिंगार को सिंगारिबौ ।।

### 195. संस्कृतमञ्जरी by वरद भट्ट

Closing :

कृता वरदभट्टेन गीर्वाणपदमञ्जरी ।
गणेशप्रीतये चैवं वै दिवा प्रीतये भवेत् ।।

### 7026. सङ्गीतकल्पतरुः by अशोकमल्ल

Closing :

यस्यासीज्जनकः प्रदत्तकनकः प्रत्यर्थिपृथ्वीभुजो
जित्वा संगरसम्मुखानविमुखः श्रीवीरसिंहो नृपः ।
सोऽशोकः कृतभूरिवैरिवनिताशोकः सतामग्रणीः
कीर्त्यै कल्पतरुं व्यरीरचदिमं रामप्रसादात् प्रभुः ।।१।।

योऽशोकः सुकृतैः कृतप्रकृतवान् दानैर्द्विजेन्द्रानल
बन्धूनां विनयैर्मतां शिशुमना मानीनृपोऽभूरुषत् ।
तस्येयं कृतिनः कृतिर्विजयतां श्रीरामसंराधन–
ध्यानावाप्तमहामतेर्भुवि जितप्रत्यर्थिपृथ्वीभुजः ।।२।।
नानाग्रन्थान् मयालोच्य चेतसा सत्सुमेधसा
कृतः कल्पतरुर्ग्राह्यो गुणग्राहिभिरादरात् ।।३।।
नमामि तमहं बुद्धिवेधसं स्वपुरोधसम् ।
गोपीनाथं यतः सम्यग्ज्ञातं संगीतकं मया ।।४।।

Colophon :

इति श्रीवीरसिंहदेवात्मजजगद्दुनारायणलब्धराजगजमस्तकांकुशेत्यादिविरुदावलीविराजमान-दलितरिपुराजमानसकलविद्याप्रवीणचहुवान-महीमहेन्द्राशोकमल्लविरचिते सङ्गीतकल्पतरौ नृत्यस्तबकः सप्तमः समाप्तः ।। संवत् १५५१ समये चैत्रबदि ११ रविवासरे समाप्तमिदं पुस्तकम् ।।
गौडान्वयोऽभून्महाराजसूनुः मनस्सुखो नाम सुतस्तु तस्य ।
दामोदरो यः सुधिया च तेन यथाप्रतीदं लिखितं विचार्य ।।

## 7037. सङ्गीतमालिका by महमदसाहि

Opening :

प्रणम्य परमानन्दं शङ्करं लोकशंकरम् ।
भणिष्यामि समासेन नर्तनं तापकर्तनम् ।।१।।

(भाषा) शंकर जो है करतार, तिहिं कहं प्रणामु करि नृत्याध्याय कहि हौं । सो कैसो है नृत्याध्याय, चित्त को जो है [ताप] तिहिं कहं दूर करतु है । करतार कैसो है, परमानन्द रूप जो हैं ।

अब अखारे को वर्णन कहियतु है—

चञ्चत्काश्मीरभित्तिर्मणिमयरचितानेकवातायनश्रीः
नानावर्णैर्वितानैरतुलविरचिता पुष्पराजीविशेषैः ।
रत्नस्तम्भाभिरामा मरकतमणिभी रङ्गचित्रा विचित्रा
रम्या सर्वर्तुकाम्या जयति नरपतेर्नृत्यशाला विशाला ।।

Closing and Colophon :

इति श्रीपेरोजसाहिवंशान्वये मानिनिमनोहर-कामिनीकामपूरणविरहिनीविरहभञ्जन-सदावसन्तानन्दकन्दारिगजमस्ताकाङ्कुशश्रीमत्तातारसाहिग्रात्मज-महमद्साहिविरचितायां सङ्गीतमालिकायां नृत्याध्यायः समाप्तः ।। संवत् १७१० वर्षे शाके १५७५ प्रवर्तमाने महामाङ्गल्यप्रदवैशाखमासे शुक्लपक्षे तिथौ १५ चन्द्रवासरे पुस्तकं समाप्तम् ।।

### 6584. सङ्गीतदर्पणः by दामोदर

Opening :

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
सङ्गीतशास्त्रसंक्षेपः सारतोऽयं मयोच्यते ।।१।।
भरतादिमतं सर्वमालोक्यातिप्रयत्नतः ।
श्रीमद्दामोदराख्येन सज्जनानन्दहेतुना ।।२।।

### 6585. सङ्गीतदर्पणः by शार्ङ्गदेव

Opening :

आङ्गिकं भुवनं यस्य वाचिकं सर्वव्राङ्मयं
आहार्यं च चन्द्रतारादि तन्नुमः सात्विकं शिवम् ।।१।।
शिवप्रसादसम्प्राप्तनिस्सीमज्ञानसम्पदा ।
तन्यते शार्ङ्गदेवेन नर्तनं तापकर्तनम् ।।२।।

### 7458. सङ्गीतमाधवम् by प्रबोधानन्द सरस्वती

Opening :

सदानन्दे वृन्दाविपिनवरकुञ्जे नवतडिद्-
घनज्योतिः पुञ्जं किमपि कलगुञ्जन्मधुकरे ।
नवोन्मीलितकैशोरकललितलीलारसमयं
प्रियं तज्जानीयान्मधुरमधुरं धामयुगलम् ।।१।।

Closing :

श्रीराधिकामाधवयोः पदाम्बुजे, निर्माय सत्काव्यमिदं मयार्पितम् ।
तेनैव तौ प्रीतहृदौ कदापि मां, स्वामङ्घ्रि तां दर्शयतां रहःकलाम् ।।

Colophon :

इति महाप्रेमरसाधिदेवतानुचरीव भूषता केनापि प्रकटीकृतम् ।।इति सङ्गीतमाधवकाव्यं समाप्तम् ।।

On the margin :

श्रीगोविन्दहरेः पुरः प्रतिदिनं गानाय चैतन्मया
राजेन्द्राय शराभ्रभूहयमखा हर्त्रे कलौ संविदे ।
श्रौतस्मार्तविधानसाधनकृते तिष्येति सत्यं पुनः
श्रेतां संविदधातुमच्युतकलारूपाय भूपाय वै ।।
सङ्गीतमाधवमतीवरहस्यरूपं प्रीत्या समर्पितमनन्तपदानुबद्धं ।
सम्राड्वराय जयसिंहनृपाय वेदभागेन्दुपूर्वसहिताय [महाशयाय] ।।

6589. संगीतरत्नाकर: by शार्ङ्गदेव

Opening :

ब्रह्मग्रन्थिजमारुतानुगतिना चित्तेन हृत्पङ्कजे
सूरीणामनुरञ्जक: श्रुतिपदं योऽयं स्वयं राजते ।
यस्माद् ग्रामविभागवर्णरचनाऽलङ्कारजातिक्रमो
वन्दे नादतनुं मुहुर्मुहुजगद् गीतं मुदे शङ्करम् ॥

Colophon :

इति श्रीमदनवद्यविद्याविनोदिश्रीकर्णाधिपति-श्रीशोढलदेवनन्दननिश्शङ्कश्रीशार्ङ्गदेवविरचित-संगीत-
रत्नाकर: ॥

6588. संगीतरत्नाकरकलानिधि: by कल्लिनाथ

Opening :

कर्णालम्बितकम्बलाश्वतरयोर्गीतामृतास्वादना-
दान्दोलीकृतमौलिनिर्झरनदीतारङ्गपाटश्रिया ।
नृत्यं बद्धकलाकलापविलसद्ब्रह्माण्डखण्डान्तरं
तत्तूर्यत्रयघोषरूपवपुषं वन्दे भवानीपतिम् ॥
आस्ते कर्णाटदेश: ................
माता नारायणी यस्य पिता लक्ष्मीधर: स्वयम् ।
शाण्डिल्यगोत्रक: सोऽयं साक्षात् सङ्गीतदेवता ॥
तमहं कल्लिनाथार्यं स राजा (?) वहुमानत: ।
रत्नाकरं च व्याकुर्वे लक्ष्मणकोविदस्तुत: ॥

Closing :

एवं समृद्धसङ्गीतरत्नाकरकलानिधे:
सुधास्वादे वसुधियामानन्दश्चिरमेधताम् ॥

Colophon :

इति श्रीमदभिनवभरताचार्यरायवरकारतोडरमल्लश्रीलक्ष्मणाचार्यनन्दनचतुरकल्लिनाथविरचिते सङ्गीत-
रत्नाकरकलानिधौ नृत्ताध्याय:समाप्त: ॥ संवत् १७३४ ॥

6790. संगीतरत्नाकररसप्रदीप: by नूरखान

Opening :

The commentator नूरखान introduces himself :—
अनुपम व्याघ्रकुल लक्ष्मणसागर, जेथ उपजला अंचुलजी अपर सुधाकर ।
तेथा तनयु राउ रेउजी अग्रगणी, जोकीं जाला सकलवीर मण्डलीमुकुटमणी ।

ते जे मिरवे सहस्रफणी देदीप्यमानु, तया सुनु सीहुँ सरजा नूरखानु ।
जैणे व्यापादिला तोडरावज्जखान ।
हा अवतार अवतारला दूजा कली करणु महिमाँजी ।।

Colophon :

संवत् १७३७ वर्षे मांगसिर सुदि ७ दिनेऽति-मंगलम् ।। श्रीशेखावतवंशे महाराजधिराज श्री ५ श्री-रामसिंहजी सुत श्रीमहाराजकुमार श्रीकिशनसिंहजीवाचनार्थं लिखितं च श्रीऔरंगाबादीय श्री जयसिंहपुरामध्ये ।

The word शेखावतवंशे is erased. In the other manuscript no. 6791 the word कछवाहा appears clearly.

### 6884. संगीतोपनिषत्सारोद्धारः by सुधाकलश

Opening :

।। ॐ नमः श्रीसर्वज्ञाय ।।

आनन्दनिर्भरपुरन्दरपङ्कजाक्षिनाट्यक्षणत्रुटितहारलताविमुक्तैः
मुक्ताफलैः किल दिवापि विसर्पितारा यद्देशनावनिरभूत् स जिनः श्रिये वः ।।१।।
विश्वस्य संशयमयज्वलनोग्रहेतिनिर्वापणाय किल या वहते करेण ।
प्रौढं कमण्डलुमहो अमृताभिपूर्णा सा भारती भवतु वः श्रुतदानवीरा ।।

Closing :

सङ्गीतोपनिषद्ग्रन्थं खाष्टाग्निशशिवत्सरे । (१३८०)
ऋतुशून्ययुगेन्द्वाब्दे तत्सारं चापि निर्ममे ।।५३।। (१४०६)

Colophon :

इति मलधारिगच्छमण्डनवादीन्द्रश्रीराजशेखरसूरि-शिष्यवाचनाचार्यश्रीसुधाकलशविरचिते स्वोपज्ञसंगीतोपनिषत्सारोद्धारे नृत्यपद्धतिप्रकाशनो नाम षष्ठोऽध्यायः ।।

### 7736. सत्यधर्मचरित्रप्रदीपः by पण्डितमण्डली of S. Ram Singh II.

Opening :

।। श्रीगणेशायन मः ।।

सर्वस्य धातारममेयरूपमुमापतिं देवगणैः सुपूजितम् ।
चक्राङ्कितोद्धारसुधेश्वरं तं श्रीराजराजेश्वरमीशमीडे ।।१।।
राजराजेश्वरं नत्वा स्मृत्वाथ गणनायकम् ।
सत्यं धर्मस्य चरितं लिखामि धर्मसिद्धये ।।२।।

.... .... .... .... ....

तस्यात्मजो रामसिंह : सूर्यवंशसमुद्भवः ।
विप्राणां पालको नित्यं श्रीमान् जयपुराधिपः ।।५।।
द्विजान् लोभग्रहग्रस्तान् तप्तमुद्रानुधारिणः ।
नाशकान् वेदधर्माणां पाखण्डशास्त्रमोहितान् ।।६।।
पाखण्डान् पतितान् दृष्टवा शूद्रधर्मपरायणान् ।
दासधर्मानुरक्तानामेषां मुक्तिः कथं भवेत् ।।७।।
इति चिन्तासमाविष्टः स्वधर्मं मनसा स्मरन् ।
जातिधर्मान् वर्णधर्मान् पूर्वं श्रुत्वा विधानतः ।।८।।
.... .... .... ....

विचार्य मनसा राजा गतो वाराणसीं प्रति ।
वयोवृद्धान् तपोवृद्धान् शास्त्रवृद्धान् द्विजन्मनः ।।१४।।
आहूय परया भक्त्या पप्रच्छ विनयान्वितः ।
शङ्खचक्रे तापयित्वा दहन्त्यत्रैव देहिनः ।।१५।।
वेदमार्गविहीनानां जपे यज्ञे विशेषतः ।
नाधिकारः कथं तेषां यथार्थं ब्रूत मां द्विजाः ।।१६।।
इति तद्गदितं श्रुत्वा विचार्य मनसा सकृत् ।
ब्राह्मणाः परमप्रीता धर्माचारमुपाजगुः ।।१७।।
.... .... .... ....

तत्तत्पत्रस्थितं सर्वं श्रुत्वाथ स्मृतिपूर्वकम् ।
फाल्गुने कृष्णे पक्षे च एकादश्यां तथा निशि ।।१७७।।
शतर्णां द्विसहस्रे च द्वाविंशत्यधिके शके ।[1]
स राजा परमप्रीतः संश्लाघ्य द्विजपुङ्गवान् ।।१७८।।
ददौ तेभ्यः प्रहृष्टेभ्यो वरं सर्वार्थसाधकम् ।
अधिकारस्तु धर्मस्य स्थापने द्विजपुङ्गवान् ।।१७९।।
प्रायश्चित्तविधानस्य तप्तमुद्राङ्कितस्य च ।
अक्षरा ये नृपमुखान्निःसृता धर्मसिद्धये ।।१८०।।
तत्र स्थिताधिकारस्थाः कायस्थाः लिपिकारकाः ।
वराक्षराणि पत्रे च लिलिखू राजमन्दिरे ।।१८१।।

### 102. सत्यहरिश्चन्द्रनाटकम् by राम

Opening :

देवाय विश्ववन्द्याय नाभेयाय नमो नमः ।
सर्वोऽप्येष मनुष्याणां यदुपज्ञाक्रियाक्रमः ।।१।।

1. The reading is not clear but the date is mentioned as 10th Feb., 1866 AD. on the margin.

नान्द्यन्ते सूत्रधार :—

भो भोः स्फुरितनिश्शेषकलासम्पदः सभासदः किमपि वो विज्ञापयामि-

अधीती सर्वभाषासु ग्रहीती दशरूपके ।

आम्नातो रसकाव्येषु प्रबन्धान् द्रष्टुमर्हति ।।

.... .... .... .... ....

(विहस्य) सरसतायां किमुच्यते प्रबन्धस्य यतः–

व्युत्पत्तिर्मुखमेव नाटकगुणन्यासे तु किं वर्ण्यते

सौरभ्यप्रसवा नवा भणितिरप्यस्त्येव काचित् क्वचित् ।

यः प्राणान् दशरूपकस्थमकरोत्क्षेपं समाचक्षते

साहित्योपनिषद्विदः स तु रसो रामस्य वाचां परम् ।।

### 7472. सप्तपदार्थीटीका मितभाषिणी by माधवारण्य

Opening :

वेदान्तविज्ञानसुनिश्चितार्थैर्योगीश्वरैर्ध्येयमजं विशुद्धं

उमानुमाभ्यामभिगम्यमानं वन्दे महेशं सदनुग्रहेशम् ।।१।।

विघ्नेशादीन्नमस्कृत्य माधवारण्यः सरस्वती ।

शिवादित्यकृतेष्टीकां करोति मितभाषिणीम् ।।२।।

Closing :

गोराष्ट्रदेशोऽखिलराष्ट्रवर्यः सदाकरो दक्षिणभूमिनिष्ठः ।

विराजते सह्यगिरीन्द्रसानौ यत्रास्ति गोकर्णमहाबलेशः ।।

तद्देशजन्मा यतिरेकदण्डी सरस्वतीमस्तकमाधवाख्यः ।

सोऽयं शिवादित्यकृतेरकार्षीट्टीकामिमां बालसुखप्रवृत्यै ।।

माधवाख्ययतीन्द्रेण गोपातीरनिवासिना ।

कृता च सप्तपदार्थ्याष्टीकेयं मितभाषिणी ।।

### 549-550. सभ्याभरणम् (स्वकृतमयूखमालाटीकासहितं) by रामचन्द्र

Opening : ।। रामभद्र जय ।।

पादारविन्दं मठगस्य विष्णोस्तदङ्कगायाः कमलालयायाः ।

वन्दे जगद्वन्द्यमचिन्त्यशक्तिं विश्वेश्वरं पार्श्वगतञ्च वन्दे ।।१।।

Closing :

ग्रामे प्रकाशासविधे बिलाले विघ्नेशयुक्तोऽस्ति मठे रमेशः ।

तस्याज्ञया मन्दधिया मयायं ग्रन्थः कृतस्तत्सुकृतं पितुः स्यात् ।।७।।

प्राप्तप्रौढिरशेषशास्त्रविषये श्रीविश्वनाथः सुधी-
यं धीमन्तमसूत शोभनसमारम्भा च रम्भा सुतम् ।
श्रीसम्याभरणस्य साधुविवृतौ श्रीरामचन्द्राभिधा-
भाजस्तस्य कृतौ समापदचिरादुल्लास एषोऽन्तिमः ।।

Colophon :

इति श्रीमदनेकविद्वदन्तेवासिवन्दितपादारविन्दस्य भट्टविश्वनाथस्य तत्तनयेन श्रीरामचन्द्रचरणकमलोपासिना प्रकाशासन्निहितविलालाग्रामवासिना रामचन्द्रेण निर्मितायां स्वकृतसभ्याभरणपञ्जिकायां मयूखमालायामन्तिम उल्लासः समाप्तः ।। समाप्तोऽयं ग्रन्थः सीतापतेः प्रसादात् ।। श्रीरस्तु ।।

संवत् १६९० वर्षे माघ सुदि २ सोमे लिखितोऽयं ग्रन्थः व्यासनृसिंहसुतपुरुषोत्तमेन ।।

## 5143. **समरसारशाकुनम** by **रामदास** s/o **सूर्यदास**

Closing :

वंशे वत्समुनीश्वरस्य शिवदासाख्यादुरुख्याततः
सम्राडग्निचिदाप यस्य जनकः श्रीसूर्यदासो जनिम् ।
जन्मातुर्यशसा दिशो दश विशालाक्षा वलक्षा व्यभीद् (व्यधात्)
साम्राज्यस्वरशास्त्रसारविचितिं रामो वसन्नैमिषे ।।

## 540. **सरसरसास्वादसागरः** by **श्रीकृष्णभट्ट कविकलानिधि**

Opening :

विघ्नविदारणविरुदं वारणवरवदनसविकासम् ।
वरदं विशदविवर्धितवाणीबुद्धि विनायकं वन्दे ।। १ ।।
गौर्यां प्रेमयुतं गजाननहसं जीवानुकम्पेक्षणं
सोत्साहं त्रिपुराभिषेणनविधौ भ्रूक्षेपदग्धस्मरम् ।
भीत्या मुक्तपरस्त्रिय विषयजानन्दैकनिन्दाकरं
रत्यामात्तदयं विशुद्धवपुषं भूयो भवं भावये ।। २ ।।
ग्रन्थं सरसरसाढ्यं रचयितुमिच्छुः कविः कृष्णः ।
विज्ञापयामि नवरसमयमहमेकं शिवं नित्यम् ।। ३ ।।

Closing :

काव्यानि कानिचिदिह प्रसरद्रसानि ग्रन्थे धृतानि कविभिर्बहुसम्मतानि ।
तेनैव भूरि गुणवृन्दगभीरतास्मिन् वर्वर्ति सर्वकवितानि बहूपरिष्टात् ।। ४१ ।।
अष्टानामपि भेदा धृताः रसानामुदाहृतीकृत्वा ।
तेष्वस्ति राजरीतिः सापि परमं ज्ञायतां कविभिः ।। ४२ ।।

माघे सिते पञ्चम्यां मधूत्सवादौ समोदलीलायाम् ।
दृग्व्योमवस्विलाङ्के वर्षे किल विरचितो ग्रन्थः ।। ४३ ।। (१८०२ वि०)
श्रीकृष्णभट्टकविना समस्तकविताकलानिधानेन ।
सरसरससरसनम्नि ग्रन्थे व्याख्यामयो ह्यसौ ग्रन्थः ।। ४४ ।।

Colophon :

इति श्रीपदवाक्यार्थप्रमाणपारावारीणमुरलीधरभट्टविद्यावागीशभट्टाचार्यात्मजश्रीलक्ष्मणपण्डित-तनूजतैलङ्गवंशरत्नमधुपुरीस्थकविकुलचूडामणिमयूखमञ्जरीनीराजितचरणकमलकविपण्डितसकल-कलानिधानकविकलानिधिरामायणनिर्माणवाल्मीकिदेवर्षिश्रीकृष्णभट्टविरचिते सरसरसास्वादसागरे हावदूतिकारसनिरूपणं नाम अष्टमी लहरी ।।

गुरुतातग्रन्थकर्तुराज्ञया सर्वतत्त्ववित् ।
देवर्षिद्वारकानाथः शोधपाठं चकार ह ।।

संवत् १८११ चैत्रे ।। शुभं भूयात् ।।

7668. सवायीरामविलासकाव्यम् by देवदत्त त्रिपाठी

The poet describes the pedigree of the Kachhavāhā rulers, in verses, from ब्रह्मा to सवायी रामसिंह । The reign of सवायी रामसिंह is described with details.

Closing :

श्रीमत्पण्डितशिवसहायसूनुः श्रीरामपादद्वय-
सेवातत्परसद्गुणैकनिलयः श्रीदेवदत्तो द्विजः ।
स्थित्वा श्रीजयसिंहदेवनगरे चक्रे स्तवश्चाद्भुतं
भूयाच्छ्रीविदुषां मुदे निखिलदं संसेवितं सत्परैः ।। ३८ ।।
लक्ष्मीस्ते पङ्कजाक्षी निवसतु भवने भारती कण्ठदेशे
वर्धन्तां बन्धुवर्गाः प्रबलरिपुगणा यान्तु पातालमूले ।
देशे देशे च कीर्तिः प्रभवतु भवतां पूर्णकुन्देन्दुशुभ्रा
जीव त्वं पुत्रपौत्रैस्सकलगुणयुतैस्स्वस्ति ते नित्यमास्ताम् ।। ३९ ।।

हे राजन् !

पुत्रं लभस्वात्मगुणानुरूपं भव त्वमीड्यो भवतः पितेव ।
यथा समुद्रान्निखिलेषु व्यक्तश्चन्द्रो जनानन्दकरो बभूव ।। ४० ।।

### 7332. सारसिद्धान्तलेशः by शेष गङ्गाराम

Opening :

श्रीगोविन्दं मुनींस्त्रींश्च गुरुं नत्वा विरच्यते ।
सारसिद्धान्तलेशः श्रीसुकुमारधियां मुदे ।। १ ।।

Closing :

शेषगङ्गारामकृतः शब्द (सार) सिद्धान्तलेशः समाप्तः ।।
महाराधिराजश्रीसवायीजयसिंहतः ।
प्राप्ताज्ञः शब्दसिद्धान्तलेशं चक्रे सतां मुदे ।।

### 7520. सिंहसिद्धान्तसिन्धुः by शिवानन्द गोस्वामी

Opening :

यस्यांघ्रिद्वयपूजनेन निखिलाः सिद्धीर्लभन्ते नराः ।
वृद्धीः प्राप्य वसन्ति वेष्मसु परास्तेषां समाः सम्पदः ।।१।।
.... .... .... .... ....
दृप्यद्वैरिसमुच्चयक्षयकरः कीर्तिद्युतिद्योतिता-
शेषाकाशदिगन्तरः पटुतरः प्राज्ञौघवित्तार्पणो ।
राजद्राजसभासु सज्जितगुणग्रामोऽभिरामो भृशं
भक्तः श्रीनृहरेर्विभाति भुवने बुन्देलभूपान्वयः ।।

The author then describes मधुकर (मधुकरसाहि), रामसाहि, संग्रामसाहि, भरतसाहि and देवीसिंह, who was his patron.

Colophon :

इति गोस्वामिश्रीजगन्निवासात्मजगोस्वामिशिवानन्दभट्टविरचिते सिंहसिद्धान्तसिन्धौ द्विनवतितमस्तरङ्गः ।।९२।।
प्रोक्तं गणेशप्रमुखामराणामुपासनाया निखिलं विधानं
विलोक्य तच्चेतसि साधकानामात्मन्यमन्दो भवतात्प्रमोदः ।।
चन्द्रवह्नितुरगैकसंमिते वत्सरे सहसि शुक्लपक्षतौ (१७३१)
शीतरश्मिसुतवासरे शुभे ग्रन्थ एष परिपूर्तिमागात् ।।
आश्विन शुक्लपक्षे १ गुरुवासरे संवत् १७३३ ।।शुभमस्तु।। श्रीरस्तु ।।

### 5591. सुन्दरसिद्धान्तः by ज्ञानराज

Opening :

भाले यस्य कलानिधिर्मधुमिलद्भृङ्गावलिर्गण्डयोः
कण्ठेऽहिर्विलसत्यलं पदयुगे गीर्वाणचेतोगुणः ।
ब्रह्मापि त्रिजगत्सिसृक्षुरभवन्निर्विघ्नसंसिद्धये
श्रीमन्मङ्गलमूर्तिमाद्यमलयं तन्नौमि भक्तप्रियम् ।।१।।

## EXTRACTS EROM AND NOTES ON

### Some Imaortant Manuscripts

### 2. Bhāṣā

### 3269 (2). अङ्कबत्तीसी by रामचन्द्र दुबे

Closing :

संवत् सत्रह सै बरस, बीते आगे आठ ।
काती सुदी षष्ठी कियो, रामचन्द्र यह पाठ ।।

### 3670 (2). अपरोक्षानुभूति विवरण भाषा by श्रीष्कृण भट्ट कविकलानिधि

Closing :

पूरन प्रकास रूप आनन्द विकासमय,
हरत अविद्या तम नाहिं न सहत हैं ।
अध्यातम दीपक उदार परमारथ के,
ग्रन्थन के पंथ लगे तत्त्वहिं लहत हैं ।।
आपु सुनि समुझि नित औरै समुझावत हैं,
जिनको प्रसंग बड़भागियै गहत हैं ।
ब्रह्मज्ञानभीनें चक्रवर्तिन के सिरोमनि,
नित्य सुखसागर में क्रीडत रहत हैं ।।१३५।।
तिनकौ हुकम पाय कवि कोविद कृष्ण परम सुखदाई ।
अपरोछानुभूति यह पुस्तक भाषा बरनि बनाई ।।१३६।।
गगन सिद्धि मुनि चन्द्रमित, बरष जेठ सुदि पच्छ । (१७८० वि०)
राका तिथि कविवार यह, ग्रन्थ रच्यौ अति अच्छ ।।१३७।।

### 3807. अमरुशतक पद्यानुवाद by वंशी कवि

Opening :

श्लोक : ज्याकृष्टिवद्धखटकामुखपाणिपृष्ठ-
प्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः ।
त्वां पातु मञ्जरितपल्लवकर्णपूर-
लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ।।१।।

कवित्त : सहज सुभाएं कर बांए में धनुष धरि,
खैंचि खटकामुख सौं दाएं ज्यह धारी है ।
दाएं कर पृष्ठ के नखांसु के निकर मिली,
तिरछे चितौंननि की उपमा निहारी है ।।

मानों कर्णपूरदल मञ्जरित लोभ करि,
भ्रमत भ्रमर ऐसी सोभा धरे भारी है ।
ऐसे समै ऐसो नीकौ देवी को कटाछ,
कवि बंसी निज भक्तन कौं सदा सुखकारी है ।।१।।

Closing :

पिंगल वयाकरण विमल अलंकृति,
ग्रो लोककला पूरो रूरो सहित को साज जू ।
ऐसो रसग्रन्थ यह ग्रमरूशतक कीनों,
संकर रसिक रसग्रन्थ सिरताज जू ।।
पण्डित सदासिव के हेत सौंब मंहि कीनौ,
कबि बंसी लहि सम्पत्ति समाज जू ।
चूक परी होइ ज्योंऊ तोंऊ निज दास कृत,
ऐसे जिय जानि छमा कीज्यौ कविराज जू ।।१०४।।

Colophon :

इति श्रीमदौदार्यधैर्यचातुर्यगुणगणमालामण्डितपण्डितश्रीसदाशिवनिदेशनियुक्तकविबंसीधर-विरिचितः श्रीमदमरुशतश्लोकार्थानुकृतिनिबद्धभाषासम्पूर्णम् ।।

## 3739 (2). ग्रलंकारमाला by सूरति मिश्र

Opening :

तडि घन वपु घन तडि बसन, भाल लाल पख मोर ।
व्रजजीवनि सूरति सुभग, जय जय जुगलकिशोर ।।१।।
ग्रलंकार कवितानि के, सबनि समुझिबे हेत ।
रच्यौ ग्रन्थ सूरति सु यह, लक्षण-लक्ष्य-निकेत ।।२।।

Closing :

सूरतिमिश्र कनौजिया, नगर ग्रागरै बास ।
रच्यौ ग्रन्थ तिहिं भूषननि, वलित विवेक विलास ।।२०८।।
संवत् सत्रह सै बरस, छ्यासठि सावन मास ।
सुरगुरु सु एकादशी, कीनों ग्रन्थ प्रकास ।।२०९।।

## 3809 (2). ग्रष्टावक्र भाषा by धुरन्धर कवि

Opening :

करि प्रणाम हरिकौं जु हैं, धरे सुदर्शन चक्र ।
कियौ धुरन्धर सुकवि यह, भाषा ग्रष्टावक्र ।।१।।

पूछ्यो अष्टावक्रसौं, जनक विदेही जाइ ।
मुकति ज्ञान वैराग्य की, विधि प्रभु मोहि बताइ ॥२॥

Closing and Colophon :

इति श्री ब्रह्मविषयानुभवरसिकसुकविधुरन्धरकृते अष्टावक्रः समाप्तः ॥
रचना संवत् १७५८; लिपि संवत् १७७८

### 3250. कर्णपर्व भाषा by रसराशि रसिककिशोर

Opening :

तनय होत अरु बढत गोत कीरति उदोत नित ।
होत दाम सुख सहित धाम अरु वपु सकाम जित ॥
कटत पाप अरु त्रिविध ताप दुख नाम जाप करि ।
गुन गभीर नर होत धीर परपीर लेत हरि ॥
अरु अधिक होय जाहिर जगत अष्टसिद्धि नवनिधि धरत ।
नरपाल-जालवंदित चरन सुगुरु गनेस सुमिरन करत ॥
जाके उगै प्रफुलैं सब कंज सुकोकनि मोदवढावनि हीके ।
सास्तर वेद पढैं दुजराज लहैं सब नैननि कारज नीके ॥
तेज लखें तिहिं के 'रसरासि' लगैं सब तेज ततच्छन फीके ।
पाप के दंगल नास करैं सुभ मंगल दर्शन सूरजजी के ॥

Colophon :

इति श्रीश्यामसिंहआज्ञा रसरासिरसिककिशोरविरचिते कर्णपर्वणि समरसिन्धौ अर्जुन-विजयवर्णनो नाम एकविंशतितमोल्लासः ॥

If 'रसिक किशोर' is not an attribute, this रसराशि is different from रसराशि रामनारायण, a favourite poet of म. सवाई प्रतापसिंह ।

### 4801. कल्किजी के कवित्त by देवमणि

Opening :

जौनपति जोर उतपात ठौर ठौर खेद,
भूमिदेव धरामें सकैं न वेद धुनि कै ।
दूवरी चरैं न तिन धेनु दिन दीन दसा,
उठै वध—व्यथातैं किलास पुनि पुनि कै ॥

सांकरे में सेवग के संकटहरण प्रभु,
ग्रसरन-सरन विरुद ग्रापु गुनिकैं ।
पुरुष अनादि ग्रादि कलकी प्रगट भये,
कल की पुकार गऊ विप्रन की सुनिकैं ।।१।।
कियौ साधु मण्डल मण्डित मंगलन, परी
मण्डली मलेच्छन की तुरत तवाई में ।
देवमनि विप्रन के वेद विधि चाह बढ़ी,
दाह बढचौ कुचलन चरित चबाई में ।।
धरम के रखवारे छिति पर छत्री पूरो,
छत्री को धरम देखि जैसिंघ सवाई में ।
जगमग जोति सों सवाई जैपुर बीच,
कलकी प्रगट भये कलि की ग्रवाई में ।।२।।

The work consists of such 10 कवित्तs only.

4641. कल्किकाव्य by श्रीकृष्णभट्ट कविकलानिधि

Opening :

।। श्रीकल्किने नमः ।। श्रीसुशीलायै नमः ।।

दोहा–कल्की मंगलनाम सौं, कलि ग्रध कटि घटि जात ।
जैसे सूरज कै किरन, मिटत तिमिर संघात ।।१।।

।। कल्किमंदिरध्वजावर्णनम् ।।

दूर ही बेगि बिडारत-सी उमड़े कलिकालहि देत रुजा है ।
मंगल ग्रोघ बुलावत सी पसरी सतधर्म की मानो भुजा है ।।
जाहि विलोकत पातक जात विलात सवै जन पूजतु जा है ।
श्रीकलकी नृप कै निज मंदिर राजि रही पंचरंग धुजा है ।।

।। कवित्त ।।

देखें दूर ही ते दुरैं काम क्रोध लोभ मोह,
दिन दिन पाप-परिवार झहरात है ।
धरियत धरा में ग्रखंड धन, धर्म, धाम,
मंगल समाजन कौं देत लहरात है ।।
जाके छांह छिपत ग्रछेह छल छिद्र छोह,
छाजत छबीलो छबिपुंज छहरात है ।
कल्की कलिहरन कृपाल के निकेत पर,
धुजा फहरात त्यों कलि न ठहरात है ।।

It is followed by an account of कल्कि according to कल्किपुराण ।

।। कवित्त ।।

फैलत कराल कलिकाल घोर पातकनि,
भार भयो भूमि धर्मधारी द्विज डगरे ।
स्वाहा स्वधा वषट्विहीन् सुर दीन भये,
विनती करन विधिलोक गये सगरे ।।
छीरनिधि-तीर जाइ पाइ प्रभु ग्रान में हू,
जानत उजरि गयो धरम को मग रे ।
ताकी रच्छा हेतु विष्णुजसा के निकेत व्है हौं,
धरे चारि व्यूह सब कारिज कौं अगरे ।।

Closing :

।। कवित्त ।।

ग्रादि कलि संध्या माँझ दीनानाथ साधुनिकैं,
रच्छा हेत ग्रापने विरुद कौं सम्हारेंगे ।
वेदधर्म धारन कौं भूमि-भार तारन कौं,
पाप के निवारन कौं ग्रापु पाइ धारेंगे ।।
कूरमकलस महाराज श्रीसवाई जय-
सिंह में प्रकटरूप विक्रम पसारेंगे ।
कल्की ग्रवतार या प्रकार ईंहि बार तीन-
तीन करवार लै मलेच्छन कौं मारेंगे ।।

Colophon :

इति श्रीकलिहरणश्रीकल्किदेवस्वरूपधर्मावतारश्रीसवाईजयसिंहदेवाज्ञाप्रवृत्तकविकोविद-कलानिधिकृतं कल्किकाव्यं सम्पूर्णम् ।।

### 3589. किशोरकल्पद्रुम by शिव कवि

Opening :

सार सकल संसार में, भक्ति लाड़लीलाल ।
यहै पदारथ जिन लयौ, सो जन भये निहाल ।। ७ ।।
देश सिपाहर शहर वर, श्रीपुर नृपति किशोर ।
भक्तोत्तम राजेन्द्र कुल, रहत कृष्ण बतरौर ।। ८ ।।
जाके निशिदिन भक्ति निज, भानुसुता व्रजचंद ।
तिन चरणाश्रित तासु चित, सदा रहत ग्रानन्द ।। ९ ।।

पद्धति सम नित इष्ट कौं, पूजत रचि शृंगार ।
विविध सुव्यंजन भोग धरि, विनवत प्रेम प्रकार ।। १० ।।
महाप्रसादी वस्तु नित, सादर भोजन पात ।
शिव कवि को हू देत नृप, करिकै कृपा विख्यात ।। ११ ।।
व्यन्जन उपजत पांच विधि, मूल पत्र फल फूल ।
बीज हु जनित विचारिये, त्रिया न तिन अनुकूल ।। १३ ।।
इनतैं षट रस होव कैं, उपजे पाँच प्रकार ।
भक्ष्य भोज्य चुसि लेह्य है, पेय सु यह विस्तार ।। १४ ।।

........ ........ ........ ........

आज्ञा लै नृपतेश की, संचय जुक्ति विचार ।
शिव कवि कायथ गवड़नें, रच्यौ ग्रंथ विस्तार ।।१७।।

चौपई :

अष्टादश शत परि गुनतीस, संवत मास कुआर सुधीश ।
परिवा रवि सुमुहूरत सुद्ध, रच्यौ किशोरकलपद्रुम बुद्ध ।। १८ ।।
मूल एक तत तन्तु तीन, साखा तास तीस ब्रवीन ।
ताकै लागै पत्र अनेक, कलिका फल हू फलति विवेक ।। १९ ।।
मूल प्रमाण तंतु में भेद, साखा वस्तु पत्र विधि खेद ।
कली भेद गुल भोजन जितौ, फल में गुण वरन्यों है तितौ ।। २० ।।

Closing :

हुकम पायकै नृपति कौ, जथा बुद्धि अनुसार ।
कियौ सुरस की जननिकौं, युक्ति ग्रंथ दर सार ।।

Colophon :

इति श्रीमहाराजाधिराजनृपतिकिशोरदासआज्ञाप्रमाणेन शिवकविरचितं ग्रंथकिशोरकल्पद्रुम-सहद्विंत्रिशत्शाखासमाप्तम् ।। लेखोऽयं भादव कृष्ण ३ अदितवासरे सं. १८५५ ।
सेर सवाई जैपुर को टका थका पैसा का १७। भर साढी आठ पाव का ।

### 3243. गोवर्द्धनोद्धरणलीला व्यायोग by धुरन्धर कवि

Opening :

सकल मंगलन को सदन, सिंधुरवदन गणेश ।
जाके गुणवश....................सारदा शेष ।।१।।

.... .... .... .... ....

सूत्रधार—

श्रीमहाराजाधिराज महाराज विसनुसिंहजू प्रचंड भुजदंडिन सौं व्रजमंडल के मंडलीकनि की मंडली कौं खंडन करि चारचौं चक्क आपनें प्रताप कैं बस करि कै अति रमनीय परम पवित्र श्री भगवान की लीला देखिबे कौं फरमायो है ।

.... .... .... .... .... .... .... .... .... ....

श्री महाराज विसनुसिंहजू नैं धुरंधर कवीश्वर सूं फुरमायो है कि गोवर्द्धनलीला नाटक बनावौ–सु धुरंधर कविसुर तैयार ही कियौ तातैं वाही नाटक को अभिनय कीजै ।

Closing :

भरतवाक्यं–

मणिमय अरु अन्नादि वृद्धि अवनी सब सज्जइ ।
तरवर फल सम्पत्ति बढ़त साखा अनुरज्जइ ।।
मंगलचार उदोत देस देसनि महँ किज्जिय ।
घर घर दान विसाल द्रव्य दिज्जिय अरु लिज्जिय ।।
यही भांति लोक रक्षा करत, सकल भोग भुग्गवत भुव ।
श्री विसनुसिंह जुग जुग जिवइ, छत्र छांह आमेरि ध्रुव ।।

इति निष्क्राताः सर्वे ।

### 3812. चम्पावतीविलास by पूरण कवि

Opening :

।। छन्द दुपई ।।

श्री कय हुकम दिवान विद्याधर सिरपाव पठाए ।
कायथ कुलमनि कृपाराम सजि पुरी चाटसू आए ।।
पाइ प्रताप आए हमहुं तहं कह्यौ भले हू आवौ ।
चम्पावति को वर्नन करि कवि पूरण प्रणमि सुनावौ ।।१।।

Dewan Vidyadhar had appointed Kriparam Kayasth, a descendant of Ram Rai, as Amil of Chatsu during the reign of Sawai Ishwari Singh. Harihar, Vidyadhar's sister's son, also became a Dewan. The work contains descriptions of Sawai Jaipur, Chatsu, praise of Harihar and other historical persons.

।। चम्पावती अष्टक ।।

प्रणमउं सरसत्ती सक्ति सुमत्ती जोति जगत्ती उदमत्ती ।
चढि हंस सरत्ती वेद वेदत्ती बीन बजत्ती वरदत्ती ।।
पूरन परकासी कावि-सुधा सी रटि इकसासी गुन गावैं ।
चंपावति कासीपुरी निवासी बसि सब वासी सुख पावैं ।।१।।

गढ कोट विसालैं सहर-कृता लैं देव-दिवालैं हिम कलसैं ।
चहुं वोरनि तालैं भरें किलोलैं तट तरुजालैं सुफल लसैं ।।
मयनादि चकोरैं सुक पिक मोरैं चटकरि सोरैं रट लावैं ।
चपावति कासीपुरी निवासी बसि सब वासी सुख पावैं ।।२।।
वापी कुंड कूपं अधिक अनूपं उदक सरूपं नारि भरैं ।
बन बारी बागं फूलि विभागं पवन परागं पियत फिरैं ।।
मधुपावलि गुंजैं पुंजैं पुंजैं कुंज निकुंजैं भरमावैं ।
चंपावति कासीपुरी निवासी बसि सब बासी सुख पावैं ।।३।।
बनि विविध बजारैं हाटि हजारैं साहूकारैं बनि बैठैं ।
करियत व्यौपारैं पुरुष अपारैं लिखि परचारैं लेहु जठैं ।।
सुन्दर वर नारी सरस सिंगारी जहं तहं सारी छवि छावैं ।
चंपावति कासीपुरी निवासी बसि सब वासी सुख पावैं ।।४।।
वरनां—ग्रासरमैं निज निज धरमैं घर पर घर मैं निति साधैं ।
करि करि सुभ करमैं तिरविक्करमैं नारायणमैं अवराधैं ।।
रवि सिव चामुंडा रिषभ प्रचण्डा हनु बलिवंडा प्रणमावैं ।
चंपावति कासीपुरी निवासी बसि सब वासी सुख पावैं ।।५।।
उठि ऊगत भानैं करि असनानैं पुरुष प्रयानैं मंडरावैं ।
मिलि सजि साथैं नाथ-अनाथैं पूजा हाथैं लैं धावैं ।।
इष्टासन आवैं दरसन पावैं पूजि प्रभावैं सिर नावैं ।
चंपावति कासीपुरी निवासी बसि सब वासी सुख पावैं ।।६।।
वर बाम्हन छत्रिय बनिक विचित्रिय काइथ खत्रिय बुधिवानं ।
चौधर लै सोहैं कानूगोहैं पुनि जो जो हैं परधानं ।।
पौणि हु जन साधू अमर अराधू अगम अगाधू दरसावैं ।
चंपावति कासीपुरी निवासी बसि सब वासी सुख पावैं ।।७।।
लाखन धनधारी केइक हजारी बसती सारी ध्रमधारी ।
मंडित उतसाहैं करत विवाहैं साहैं साहैं घरबारी ।
सजि सौंज अपारैं भरत भंडारैं करि जिमणारैं उमहावैं ।
चंपावति कासीपुरी निवासी बसि सब वासी सुख पावैं ।।८।।
गुनियन मिलि गावैं बंदी बिरदावैं सुजस सुनावैं सूक्ति पढैं ।
कीजत सनमानैं दीजत दानैं पट धन धानैं हयनि चढैं ।।
पूरन परभावत मन हरषावत जुग जुग गावत अनि नावैं ।
चंपावति कासीपुरी निवासी वसि सब बासी सुख पावैं ।।९।।

।। कलसा छप्पय ।।

सतिजुग **तंमावती** नाम त्रेता **पुहपावति** ।
द्वापर **चंपावति चाटसू** कलि पद पावति ।।
ठाकुर तहाँ बाँवन चत्रभुज सिव चम्पेसुर ।
चामुंडा रवि रिषभ हनूँ भैरव तिंहि पुर ।।
वर्णाश्रम पौंणि सबै तिन्हें प्रसन करियत विविधि ।
कवि पूरण पाइ प्रताप सो विलसत रिधि सिधि नऊं निधि ।।१०।।

**वर्ण्य विषय :**

देस बरणि राजा बरणि, बरणहुँ बहुरि दिवाँण ।
पूरण आमिल बरणि पुनि, बरणहुँ पुरी प्रमाण ।।
कासी सौं लै दसहुं दिसि, जहँ लगि विप्र प्रवेस ।
पूरण कवि पंडित सबै ताहि कहत ब्रह्मदेस ।।
मथुरा सों मिलि पच्छिमदिसि, मतस (मत्स्य) मुलक तिंहि नाम ।
ता मधि ढूंढाहर धरा, पुष्कर लौं सुख-धाम ।।

**सवाई ईश्वरीसिंह बर्णन :**

दल बल प्रबल प्रचण्ड सजे चतुरंग सैनि थट ।
पूरन दुंदुभि देइ चढ़े चतुरंग लेइ भट ।।
कोपि धाइ जगतेस रांन को मांन मलिउ अति ।
पुनि कोट चहुँ दिसनि फिरिउ नृप अंबावति-पति ।।
गढ लागि आरचय रारि रचि हाडे दिए हराय सब ।
कुरम ईश्वरसिंह पाइ जय जैपुर राजत अषय अब ।।

**विद्याधर दीवान :**

विद्याधर दीवांण, देखि भांणियज आपकौ ।
कियो देस-दीवांण, हरिमूरति सम हरिहरहि ।।

Closing :

काइथ कांनुवगोह, भया भवानीदत सदा ।
कविपांतिन सौं मोह, करि चंपावति सुजस लै ।।४७१।।
चंपावति सुभ थांन, बसती च्यार जुगानिकी ।
सो सब करिय बखांन, पूरन परिपूरन बरनि ।।४७२।।
कृपाराम हित बरनियउं, चंपावती चरित्र ।
सुनैं गुनैं नर होत हैं, पूरन परम पवित्र ।।४७३।।

.... .... ....

संवत दस बसु ऊपरैं, दुतिय बरस मधि मास ।
भादव की सुकला दसैं, बार बखानहुं हांसु ।।४७५।।
ता दिन कवि पूरन कियौ, चंपावतीविलास ।
सुनत गुनत पुरवैं सबै, सुत संपति की ग्रास ।।४७६।।

Colophon :

इति श्री भया कृपाराम ग्राग्यया कवि पूरणकृत चम्पावतिविलास समाप्त ।। शुभं भवेत् ।। संवत १८०२ शाके १६६७ मासोत्तम मासे शुभे फाल्गुन मासे शुभे कृष्णपक्षे तिथौ ५ गुरुवासरे लिखतं सुभचिंतक हेमराज ग्राचार्य लिखायतं धर्म्ममूर्ति गोब्राह्मणप्रतिपालक ठाकुरजी श्रीकृपारामजी ग्राग्यया कवि पूरनकृत चंपावतीचरित्र संपूर्णम् ।। शुभं भवेत् ।।

## 4471. (3) त्रियाविनोद by मुरली कवि

Opening : (f. 2b)

(ऊदल सभा विराजि कैं), कवियाँ करे बखान ।
ग्रादर करि ग्रासण दियो, बहुत किग्रो सनमान ।।१०।।
कवि सौं हँसि कीनौ हुकम, रावत उदिया भाँण ।
त्रियाविनोद गावौ गरथ, सुणि रीझै राजांन ।।११।।
मान हुकम कवि हरष मन, कीनौं गरथ उचार ।
त्रियाविनोद तसनाम धर, बरणी बात ग्रपार ।।१२।।
संवत सत्रै तीस षट, कातिक बुदि सुभमास ।
बार बुद्ध तिथ सप्तमी, कीनों ग्रंथ प्रकास ।।१३।।
रजिनीत बरणीं प्रथम, पाछै त्रियाविनोद ।
सुणत महा सुख ऊपजै, ज्यों सुत लीनों गोद ।।१४।।
.... .... .... ....

Closing :

पोथी त्रियाविनोद की, मुरली करी उचार ।
भूल्यौ चूक्यौ ज्यो कहूँ, लीज्यौ सबै सुधार ।।२०६४।। [२६४]
जद काइथ कानज चीतवो, दुवो दियो कविराव ।
तिणथी ग्रकलरी वारता, भेली लखै बणाइ ।।२०६५।। [२६५]
वारता सम्पूरण ।।

## 7826. दस्तूरनामः by जलालुद्दीन

Opening :

।। श्रीगणेशायनमः ।। बादसाह आलमगीर के साहजादे मुरादबकस की मजलस मैं नौसेरवां बादशाह का मजकूर होने लगा । जौ ग्रैसा बादसाह इनसाफ का करने वाला वा बकसस का करने

वाला इलम पढ़ा अक्कलमंद होसमंद जवां मरद षुदा ताला की बंदगी करने वाला आदमी के गुन औगुन कूं समझने वाला दूसरा और नहीं हुवा। मुरादबंकस बोले अपनी सरकार में नौसेरवां बादसाह के हुकम सैं तैयार हुई दस्तूरनामां किसरवी जिसका नाम अरबी जबान मैं मौजूद है सो आछी तरह समझने मैं नहीं आवै उसकूं फारसी जबान मैं दुरुस्त करनी चाहिये। साहजादे के हुकम सैं वुह किताब मुनसी जलालुद्दीन ने तयार करी। संबत १८६० तलक अेक सो सत्यासी बरस हुवे। और नौसेरवां बादसाह कूं संबत मजकूर सैं बारा सौ उनचास बरस १२४६ हुवे महम्मद पैगंबर बी उसी बषत हुवे हैं। किताब मैं यह मतलब नौसेरवां बादसाह ने वजीरों से यह हुकम किया। तुम अरज करो सो लिषके अरज करो। तुम्हारी अरजी पर हम दसषत करैं उसकी किताब लिषो। हमारे अहद के वा हमारे गुजरने के बाद जो कोई उस किताब कूं पढैंगे वा सुनैंगे उनकूं षुसी वा फायदे पौंहचैंगे। वजीरों ने जो जो अरज करी बादसाह ने उन पर दसषत किये तिसकी किताब दुरुस्त करी तिस किताब कूं हिंदी जबान मैं गौरधनसिंघ षत्री ने लिखा।

।।अरज।। केतेक गुनाहगारों की आप तकसीर माफ करते हैं वुह तकसीर करने सैं रुकते नहीं और तकसीर माफ करने की अरज करते ई रहते हैं यह क्या वास्ता।। दसषत षास।। तकसीरवार मानंद बीमारों की। बादसाह मानंद हकीमों की। जैसी तरह आजारियों का आजार हकीमों की दवा सैं दूर नहीं होता वुह आजारी इलाज कराने सैं रुकते नहीं। अैसी तरह यह तकसीर माफ करने को अरज किया करते हैं ।। अरज ।। उस परगने के आमिल ने सौ हजार दिरम षास षजाने बादसाही के सैं बिना हुकम हजूरवाला के मुहताज गरीबों कूं बषसस करी है ।। दसषत षास ।। यह मुबारकी कहिये बधाई का भरा हुवा काम षैरात करने का सदा ई सब कूं है ।।२।।

किताब बनाने वाला मुनसी अपनी तरफ सैं लिषता है।। अकबर बादसाह के साहजादे जहांगीर बादसाह कू वजीर ने अरज करी, फलाने सकस ने मुहर हूजूरवाला की तकलीदी तयार करके फरमान बादसाही लिष दूर के आमलों कूं फरेब की राह सैं बौहत रुप्ये पैदा किये हैं। वुह सकस लायक गरदन मारने के है। बादसाह ने बकसस वा मिहरबानी की निगाह सैं यह हुकम किया। सूरज की सी रोसनी अैसी हमारी मुहर कूं वसीला मुहताजगी वा अपनी बड़ाई का करके रुप्ये पैंदा किये। उस कूं सजा देने सैं हमारी मुहर की शान वा दरजा घटता है। अब उस कूं नसीहत कर आगे सैं अैसे काम का तौबा करवा उसका रोजीना मुकरर कर देना ।। अरज ।। षजाने षास का षजानची अरज करता है। बादसाह के बौहत बकसस करने सैं षजाने मैं कमी माल की मालूम होती है ।। दषसत ।। षुदा ताला बढ़ाने वाला माल हमारे का है, न तेरा कंजूसपना ।। बकसस वा इनसाफ जमा करने वाला दौलत का है, न थोड़ी सी अक्कल तेरी। हम बेपरवाह हैं तेरी मदत अक्कल की सैं तुम सब कूं हमारा हुकम बजाना लाजम है ।।३।।

Closing :

।। अरज ।। वुह सकस गुनाह करने वाला मकर फरेब की बंदगी करता था, अब उसने बंदगी को बी तरक किया और केतेक काम ना लायक करने अषतियार किये हैं ।। दसषत ।। उसकूं इस बिद्दत नालायक सैं षारज करना जो और सांचे रस्ते चलने वालों के सुभाव कूं बिगाड़ै नहीं ।।७४।।

।। अरज ।। फलाना सकस चोबदार हजूर के रोके सैं रुका नहीं सीने जोरी सैं दरबार मैं गया इस बात सैं इनका दारोगा परेसान षातर रहता है ।। दसषत ।। वुह दारोगा आछी तरह समझता है काम के आदमियों की दरकार ब वषत है इनका रोकना कुछ मुनासब नहीं ।।७५ ।।

।। अरज ।। बहराम आपके नजदीकियों मैं सिकार वा सैर के बहाने इन दिनों मैं जाते हैं, केतीक बात नजदीकीपने सैं वा बुजुरगी सैं दूर हैं सो करते हैं उनकूं ताकीद करना जरूर ही लाजम है ।। दसषत ।। उसका मन्हे करना सैर सिकार का वास्ते नजदीकीपने के हमकूं मुनासब नहीं तुम ही उसकूं समझा देना ।।७६।।

।। अरज ।। जिमींदार तारुं विलायत का बागी-सा हो रहा है उसके वास्ते किसी ने मामला इस माफक ठहराया है ।। दस हजार रुप्ये, आठ सौ बैल, पंदरा सौ बकरी उसकूं इनायत कीजे तौ वुह सूधा होकर बंदगी हजूरवाला की बजा लावै ।।दसषत ।। जो वुह इस थोड़ी सी बकसस पर राजी होकर बंदगी हमारी कबूल करता हैं तौ उसकूं राजी करना ।।७७।।

।। अरज ।। बकसस बादसाहों की तमाम आलम वा षास नौकरों कूं फायदेमंद है इस कूं तौ जारी राषना ही मुनासब है ।। दसषत ।। इस बात कूं यह गरीब अछी तरह समझता है जो कोई हक्कदारों कूं वा मुहताजों कूं अपने दरवाजे सैं षाली राषेगा तौ वुह सकस अपने माल का मालक नहीं है न वुह माल उसकूं मालक समझता है न उस माल कूं मजबूती है ।।७८।।

।। अरज ।। जमाने के लोग हाल के बादसाह सैं सिवाय गुजरे हुवे बादसाहों की तारीफ करते हैं, वह क्या वास्ता ।। दसषत ।। गुजरे हुवे बादसाहों की तारीफ का सुनना हाल के बादसाहों के हक्क में अछा है, तारीफ करके यह बात जताते हैं जिस तरह बकसस वा अहसान वा इनसाफ अगले बादसाहों ने किया है असी ही तरह तुम बी करोगे तौ तुम्हारी बी तारीफ जहांन के लोग किया करेंगे ।।इति संपूर्णं ।।

3670 ( 1 ) पञ्चदशीसार भाषा by श्रीकृष्ण भट्ट

Closing :

पूरब पुराने पुण्य जिनके सफल भये
पातक सकल जानै दूरि ही नसाये हैं ।
ज्ञान जोग जतन करैं जे परब्रह्म ध्यान
द्वैत ब्रह्मजाल सब जिन बिसराये हैं ।

